# विज्ञापनम्

---

इह खलु सन्ततौ प्रवाहपतितन्यायेन सर्वेषामाप्यभ्यासमर्थितक्रियमाणप्रारब्धभेदेन त्रिविधकर्ममञ्जुषा इह लोके च पूर्वाचरितसदसत्कर्मपारवश्येन सम्प्रति प्रारब्धाधीनानां नृणां भ्रमितभ्रमकवत्पुनः पुनः शरीरधारणादिषड्र्मिभोगक्रमेण जननमरणादिप्रवाहभाजां तदन्तरे च त्रिविधदुःखभोगादिना चानवरतं क्लिश्यमानानां दुस्तरभवाब्ध्युत्तरणसमर्थानिश्च प्रयतन्तो निसर्गदयालवो व्यासादयः स्मृतिशास्त्रेतिहासपुराणादीनि प्रचीक्लृपन् । तादृशापरिमेयग्रन्थानामपि सर्वेषां दुरूहत्वेन विचारासहत्वादस्माकम् विचारस्तु दुरधिगम एव । एतावता संसारिणां 'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्' इत्यादिक्रमेण पुनः पुनः संसारो नियतसिद्धः, अत एव मुमुक्षूणां भवाब्ध्युत्तितीर्षाप्रसङ्गस्यावश्याभावात् स मास्तु मुच्यन्तां कृपणा इति संचिन्त्य तेषामनेन लघुनापि ग्रन्थेन वेदान्तपरिभाषापरिज्ञानं सम्पन्नतया भूयादिति सकृपार्द्रान्तःकरणैस्त्यक्तसमस्तैषणैर्मोक्षैकपरैः श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यैः निखिलनिगमशिरोभागप्रतिपादितार्थग्रहणीय स्वनामसदृक्षं आर्यावृत्तकृतं सव्याख्यं स्वात्मनिरूपणाख्यो ग्रन्थः समकारि । सम्प्रति चैतस्य प्रायेणातीव महत्तामतीवोपयुक्तत्वं चावलम्ब्य संशोधनेन शुद्धतां कृत्वायं ग्रन्थोऽस्माभिर्मुद्रितः ।

एतद्ग्रन्थस्थार्यासु बहुत्र छन्दोभङ्गादिदोषाः सन्ति तत्र तत्र व्याख्याकृतापि यथास्थितस्यैव गतिरकारि । तथाच ग्रन्थकृद्भिः स्वात्मनिरूपणनिमग्नान्तःकरणवशात् क्षुद्रेषु छन्दोभङ्गादिदोषेषु लक्ष्यं दत्तमित्यनुमीयते । परं नैतद्दोषैर्महत्तापरिहाणिर्ग्रन्थस्य ।

सम्प्रति विज्ञाप्यतेऽस्य ग्रन्थस्य मुद्रणकालेऽपि दृगायननवधानतो यदि स्खलितान्यभूवंस्तथापि सारग्राहिणो दयालवो विद्वांसोऽन्यदोषानपहाय ग्रहणेन पात्रीकुर्वन्त्वित्यभ्यर्थये ।

---

श्रीः

श्रीमदाचार्यविरचितं

# स्वात्मनिरूपणम् ।

प्रचण्डपाखण्डविखण्डनोद्यतं त्रयीशिरोर्थप्रतिपादने रतम् ।
बुधैर्नुतं योगकलाभिरावृतं नमामि तं शंकरदेशिकं ततम् ॥

इह खलु सकलशिष्टाग्रणीर्भगवाञ्शंकराचार्यः जिज्ञासुजनानुकम्पया सकलवेदान्तसिद्धान्तरहस्यप्रदर्शनपरं वेदान्तप्रकरणमारभमाणस्तत्रादौ श्रीगुरुनमस्कारलक्षणं मङ्गलाचरणमार्यावृत्तद्वयेनाकरोत्— .

**श्रीगुरुचरणद्वन्द्वं वन्देऽहं मथितदुःसहद्वन्द्वम् ।**
**भ्रान्तिमहोपशान्तिं पांसुमयं यस्य भसितमातनुते ॥ १ ॥**

श्रीगुरुमिति । श्रीगुरुचरणद्वन्द्वं श्रीगुरूणां पदसरोजद्वयं वन्दे नमस्करोमि । अहं प्रकरणकर्ता । किंलक्षणं चरणद्वन्द्वं । मथितदुःसहद्वन्द्वं मथितमुन्मूलितं दुःसहं मुमुक्षूणामसह्यं द्वन्द्वं द्वैतं येन तत् । तत्किं । यस्य चरणद्वन्द्वस्य पांसुमयं रजःप्रचुरं भसितं भस्म तद्रजोरूपा विभूतिर्भ्रान्तिमहोपशान्तिं भ्रान्तिरेव महः यक्षस्तस्योपशान्तिं विनाशं तनुते विस्तारयति । संपादयतीत्यर्थः ॥

**देशिकवरं दयालुं वन्देऽहं निहतसकलसंदेहम् ।**
**यच्चरणद्वयमद्वयमनुभवमुपदिशति तत्पदस्यार्थम् ॥ २ ॥**

देशिकवरमिति । तं देशिकवरं देशिकेष्वाचार्येषु वरं श्रेष्ठं दयालुं कृपाशीलं गुरुमहं वन्दे नौमि । किंलक्षणम् । निहतसकलसंदेहं निहता नाशिताः सकलाः सर्वे संदेहा हृदयशङ्का येनासौ निहतसकलसंदेहस्तम् । स कः । यच्चरणद्वयं पदसरोजद्वन्द्वमद्वयं द्वैतरहितमनुभवं साक्षात्स्वरूपप्रबोधमुपदिशति तत्पदस्यार्थम् । अनुभवविशेषणमेतत् । तत्पदलक्ष्यार्थं गुरुनतिरूपं मङ्गलाचरणं तु मुख्यत्वाद्गुरुदैवतयोरैक्यचिन्तनं विद्याप्राप्तावन्तरङ्गमिति । श्रुतिरपि 'यस्य देवे परा भक्तिः' इत्यादिका ॥

इदानीमधिकारिविषयसंबन्धप्रयोजनात्मकमनुबन्धचतुष्टयं निरूपयति । तन्निरूपणस्यावश्यकत्वात्तत्र प्रथमतोऽधिकारिस्वरूपमाह—

**संसारदावपावकसंततः सकलसाधनोपेतः ।**
**स्वात्मनिरूपणनिपुणैर्वाक्यैः शिष्यः प्रबोध्यते गुरुणा ॥२॥**

**संसारेति ।** संसार एव दावो दहनं तस्य पावको दावानलस्तेन संततः परमोद्विग्नः अत एव सकलसाधनोपेतः सर्वसाधनयुक्तः । साधनानि तु नित्यानित्यवस्तुविवेक इहामुत्र फलभोगविरागः शमादिषट्कसंपन्मुमुक्षुत्वानि चत्वारि । एवंभूतोऽधिकारी स्वात्मनिरूपणनिपुणैस्त्वंपदार्थैक्यप्रतिपादनयोग्यैर्वाक्यैरुपनिषद्वचनैः शिष्य अधिकारी गुरुणा ब्रह्मनिष्ठेन प्रबोध्यत उपदिश्यते । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय' इति श्रुतेः । देशिकोपदेशलभ्यैव ब्रह्मविद्या न स्वयुक्तिस्वपरया तर्कादिना वा ॥

इदानीमात्मनस्त्रैकालिकसत्ताप्रदर्शनार्थं विद्वदविद्वत्साधारणानुभवेनात्मनोऽस्तित्वं साधयन्विषय प्रदर्शयति—

अस्तित्वयमित्यस्मिन्नर्थे कस्यास्ति संशयः पुंसः ।
अत्रापि संशयश्चेत्संशयिता यः स एव भवसि त्वम् ॥ ४ ॥

अस्तीति । अस्तित्वयमित्यस्मिन्नर्थे आत्मा स्वयमस्ति कारणत्वया-भ्यस्तिष्ठतीत्यनुभवे कस्यापि पुंसो विदुषो वाऽविदुषो वा पुरुषस्य संशयः सन्देहोऽस्ति किं । कस्यापि नास्तीत्यर्थः । स्वस्यात्मा तिष्ठतीति सर्वै-र्मनुष्यैरनुभूयते । 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः । अत्रापि आत्मनोऽस्तित्वे-ऽपि संशयश्चेत् यः संशयिता सन्देहकर्ता स एव त्वं आत्मा भवसि । अस्तित्वनास्तित्वयोरनुभविताऽऽत्मैवेत्यर्थः ॥

ननु नाहमस्मीत्येवंप्रकारकोऽपि कस्यचिदज्ञस्य जायतेऽनुभवः, यत-श्चाहमस्मीत्येवानुभवस्तत्राह—

नाहमिति वेत्ति योऽसौ सत्यं ब्रह्मैव वेत्ति नास्तीति ।
अहमस्मीति विजानन्ब्रह्मैवासौ स्वयं विजानाति ॥ ५ ॥

नाहमितीति । नाहमिति वेत्ति योऽसौ नाहमस्मीति यो जानात्यसौ स नास्तीति नास्तित्वसाक्षित्वेनापि सत्यमबाध्यं ब्रह्मैव वेत्ति आत्मानमेव जानाति । अहमस्मीति विज्ञानब्रह्मप्रत्ययगोचर आत्मा सर्वदा विद्यमा-नस्तिष्ठतीत्यनुभवन्नसौ पुरुषः ब्रह्मैव विजानात्यनुभवति स्वयम् । विनाप्रयासेनेत्यर्थः ॥

नन्वस्तित्वनास्तित्वप्रत्ययाभ्यां ब्रह्मैवानुभूयत इति चेत्किमिति सर्वै-र्नानुभूयतेऽत आह—

ब्रह्मत्वमेव तस्माद्यादहं ब्रह्मेति मोहमात्रमिदम् ।
मोहेन भवति भेदः क्लेशाः सर्वे भवन्ति तन्मूलाः ॥ ६ ॥

**ब्रह्मत्वमेवेति ।** तस्मादस्ति नास्ति समाक्षितास्यस्य ब्रह्मत्वमेवा-नुभूयते सर्वं । अनन्यमेव ब्रह्म, तर्हि नाहं ब्रह्मेत्यनुभवस्य का गतिरित्यत आह—नाहं ब्रह्मेति । यत् ज्ञानमहं ब्रह्म न भवामीति यज्ज्ञानं तदिदं मोहमात्रं भ्रान्तिरेवाविद्याजनितत्वात् स मोहः सर्वानर्थजनक इत्याह—मोहेनेति । मोहेन भवति भेदः नाहं ब्रह्मेति भ्रान्त्या भेदो भवति । भेदो नाम क्लेशादिभिः कल्पितस्वपरिच्छिन्नजीवस्वरूपो जीवत्वलक्षणो भवति जायते । सर्वेऽपि क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशाः 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । दृग्दर्शनशक्त्योरेकात्मतैवास्मिता, सुखानुशयी रागः, दुःखानुशयी द्वेषः, स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः,' इति पञ्च सूत्राणि पतञ्जलिनोक्तानि । अविद्यादिक्लेशानां लक्षणभूतानि तन्मूलभेदजनितानि भवन्ति । अतोऽविद्याजनिता नाहं ब्रह्मेति जीवोऽहमिति भेदबुद्धिस्त्याज्येत्यर्थः ॥

इदानीं यतो भेदमूलाः क्लेशा भवन्तीत्युक्तमतस्तदाश्रयान्पञ्चकोशान्विवेचये[दि]त्याह—

**न क्लेशपञ्चकमिदं भजते कृतकोशपञ्चकविवेकः ।**
**अत एव पञ्चकोशान्कुशलधियः संततं विचिन्वन्ति ॥७॥**

**न क्लेशपञ्चकमिति ।** इदं क्लेशपञ्चकमविद्यादि कृतपञ्चकोशविवेकः पुरुषो न भजते नाश्रयते । अत एव कुशलधियो विवेककुशलाः पुरुषाः सततं पञ्चकोशान्विचिन्वन्ति विचारयन्ति । पञ्चकोशस्थिता क्लेशा नात्मधर्मा इति निश्चयं कुर्वन्तीत्यर्थः ॥

ननु कोशानां विवेचनेन किं फलमित्यत आह—

**अन्नप्राणमनोमयविज्ञानानन्दपञ्चकोशानाम् ।**
**एकैकान्तरभाजां भजति विवेकात्प्रकाशतामात्मा ॥८॥**

**अन्नप्राणेति ।** नामभिर्निरूपितानामेतेषामन्नमयादिकोशानां विवेकाद्विवेचनादात्मा प्रकाशतामपरोक्षत्वं याति प्राप्नोति । किंलक्षणानां कोशानामेतैकान्तरभाजां एकस्यैकस्यान्तरे मध्ये तिष्ठता अन्नमये प्राणमयः, प्राणमये मनोमय इत्यादिक्रमेण तिष्ठताम् ॥

इदानीं पञ्चकोशानां स्वरूपदर्शनपूर्वकमनात्मत्वं साधयति । तत्र प्रथममन्नमयकोशस्य स्वरूपमाह—

**वपुरिदमन्नमयाख्यः कोशो नात्मा जडो घटप्रायः ।**
**प्रागुत्पत्तेः पश्चात्तदभावस्यापि दृश्यमानत्वात् ॥ ९ ॥**

**वपुरिति ।** वपुरिदमन्नमयाख्यः कोशः इदं शरीरमन्नमयनामा कोशः, अयं कोश आत्मा न भवति जडत्वाज्जन्यत्वाच्चेत्यनुमानमाह—वपुरिति । वपुरिदमन्नमयं च घटसदृशः यथा घटो जडो जन्यश्चेति । श्लोकोत्तरार्धेन युक्तिरपि प्रदर्श्यते । उत्पत्तेः प्राक् पश्चाच्च,विध्वंसानन्तरमपि तदभावस्यापि तस्याविद्यमानत्वस्य दृश्यत्वादनुभूयमानत्वात् । तस्मादात्मैतद्विलक्षणस्तद्द्रष्टेत्यर्थः ॥

इदानीं प्राणमयकोशस्य स्वरूपदर्शनपूर्वकमनात्मत्वं साधयति—

**कोशः प्राणमयोऽयं वायुविशेषो वपुष्यवच्छिन्नः ।**
**अस्य कथमात्मता स्यात्क्षुत्तृष्णाभ्यामुपेयुषः पीडाम् ॥ १० ॥**

**कोशः प्राणमय इति ।** प्राणमयः प्राणविकारो वायुविशेषो वपुष्यवच्छिन्नोऽन्नमयकोशान्तर्गतः प्राणमयनामा कोशो भवति । अस्य प्राणमयकोशस्य कथमात्मता स्यात् । आत्मता न संभवतीत्यर्थः । कुतो न संभवतीत्यत आह—क्षुत्तृड्भ्यामशनपिपासाभ्यां पीडामुपेयुषो निकृष्टतां प्राप्नुवतः । आत्मा क्षुत्तृड्धर्मातीत इत्यर्थः ॥

इदानीं मनोमयकोशस्याप्यनात्मतां साधयति—

**कुरुते वपुष्यहन्तां गेहादौ यः करोति ममतां च ।**
**रागद्वेषविधेयो नासावात्मा मनोमयः कोशः ॥ ११ ॥**

**कुरुत इति ।** कुरुते करोति वपुष्यहन्तां शरीरेऽहमित्यभिमानमथ च गेहादौ गृहादिविषयेषु ममतां ममैते गृहादयो विषया इत्यभिमानं यः मनोमयः कोशः । किंलक्षणो मनोमयः रागद्वेषविधेयः रागद्वेषौ विधीयेते येनासौ रागद्वेषविधेयः । रागद्वेषधर्मेत्यर्थः । असौ मनोमयः कोशः आत्मा न भवति । रागद्वेषादिहेतुत्वादित्यर्थः ॥

इदानीं विज्ञानमयकोशस्याप्यनात्मतां साधयति—

**सुप्तौ स्वयं विलीना बोधे व्याप्ता कलेवरं सकलम् ।**
**विज्ञानशब्दवाच्या चित्प्रतिबिम्बा न बुद्धिरप्यात्मा १२**

**सुप्ताविति ।** सुप्तौ सुषुप्त्यवस्थायां स्वरूपेण विलीना एव प्राप्ता भवति । बोधे च जाग्रदवस्थायां सकलं नखशिखाग्रपर्यन्तं कलेवरं शरीरं व्याप्ता व्याप्य तिष्ठति । विज्ञानशब्दवाच्या विज्ञानशब्दाभिधेया बुद्धिरपि चित्प्रतिबिम्बा यस्यां चिच्चैतन्यं प्रतिबिम्बितं याति सात्मा न भवति । सुषुप्तौ विलीनत्वादित्यर्थः ॥

इदानीमानन्दमयकोशस्यानात्मत्वं प्रतिपादयति—

**सुप्तिगतैः सुखलेशैरभिमनुते यः सुखी भवामीति ।**
**आनन्दकोशनामा सोऽहङ्कारः कथं भवेदात्मा ॥ १३ ॥**

**सुप्तिगतैरिति ।** सुप्तिगतैः सुखलेशैः सुषुप्तावनुभूयमानसुखलेशैः सुखी भवामीति सुखमहमस्वाप्समिति योऽभिमनुते जानात्यसावानन्दनामा कोशः अहङ्कारशब्दवाच्यः सोऽहङ्कारः आत्मा कथं भवेत् । न भ-

वर्तीत्यर्थः । एतेन पञ्चकोशात्मत्वनिराकरणेन तत्तच्छ्रुतियुक्त्याभासप्रतिपादितबौद्धादिवादिमतनिराकरणं बोध्यम् । तत्रान्नमयाद्यात्मत्वप्रतिपादिका श्रुतयस्तैस्तद्वादेषु नियुज्यन्ते तेषामयमाशयः । 'यतो वा इमानि भूतानि जायन्ते' इत्यनया श्रुत्या जगत्कारणत्वं खलु ब्रह्मणो लक्षणं प्रतिपादितं । तच्च तत्तत्कोशब्रह्मत्वप्रतिपादिकाभिः श्रुतिभिः प्रतिपाद्यते । ताश्च श्रुतयः—'अन्नं ब्रह्मेति व्यजानात्' इत्युपक्रम्य 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । येन जातानि जीवन्ति' इत्यन्तेनान्नमयस्य ब्रह्मत्वं, 'प्राणो ब्रह्मेति व्यजानात्' इत्युपक्रम्य 'प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यन्तेन प्राणमयस्य ब्रह्मत्वं, 'मनो ब्रह्मेति व्यजानात्, मनसो ह्येव खल्विमानि भूतानि जायन्ते' इत्यन्तेन मनोमयस्य, 'विज्ञानं ब्रह्मेति व्यजानात्, विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यन्तेन विज्ञानमयस्य, 'आनन्दो ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यन्तेनानन्दमयस्य । युक्तयोऽपि तत्र प्रदर्श्यन्ते ते तत्र न प्रसरन्ति । श्रुतीनामन्यथातात्पर्यम् । प्रतिकोशोपासनार्थत्वात्तासां तत्तत्र ब्रह्मदृष्टिः कर्तव्येति । यथा शालिग्रामादिप्रतिमादिषु विष्ण्वादिबुद्धिस्तद्वत्तस्माद्बौद्धादिवादिनोऽविचारितदृष्टय इति प्रासङ्गिकं निरूपितम् ॥

इदानीमात्मनस्स्वरूपं प्रदर्शयति—

**यः स्फुरति बिम्बभूतः स भवेदानन्द एव सकलात्मा ।**
**प्रागूर्ध्वमपि च सत्त्वादविकारित्वादबाध्यमानत्वात् ॥ १४॥**

यः स्फुरति बिम्बभूत इति । यः स्फुरति बिम्बभूतः बिम्बत्वेन देहद्वयाधिष्ठानत्वेन स्फुरति प्रकाशते स आनन्द एव आनन्दस्वरूप एव सकलात्मा सर्वेषां प्राणिनामात्मा । तत्र हेतवः प्रागूर्ध्वमपि अन्नमयादीनामुत्पत्तिविनाशोत्तरं सत्त्वाद्विद्यमानत्वादविकारित्वाद्विकार-

हितत्वादबाध्यमानत्वाद्बाधायोग्यत्वात् 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिभ्यश्चात्मा त्रिविधपरिच्छेदशून्य आनन्दस्वरूपः सिद्धः ॥

ननु अन्नमयाद्या यथानुभूयन्ते तथात्मास्ति चेत्सर्वैः कुतो नानुभूयते, अतः एतद्व्यतिरिक्त आत्मा नास्तीति चेदुच्यते—

**अन्नमयादेरस्मादपरं यदि नानुभूयते किंचित् ।**
**अनुभवितान्नमयादेरस्तीत्यस्मिन्न कश्चिदपलापः ॥ १५ ॥**

**अन्नमयादेरिति ।** अन्नमयादेरस्मात्सर्वानुभवगोचरात्कोशपञ्चका-दपरमात्मतत्त्वं नानुभूयते । किंचित्किमपि वस्त्विति चेदुच्यते तर्हि अन्न-मयादीनामनुभविता तेषां ज्ञाता एतेऽन्नमयादय इति ज्ञानवानन्योऽस्तीत्य-स्मिन्नर्थे कस्यचित्कस्यापि पुरुषस्यापलापो भ्रान्तिरस्ति । नास्तीत्यर्थः । सर्वैरपि घटादिज्ञेयपदार्थाज्ज्ञाता भिन्न एवेत्यनुभूयते ॥

नन्वनुभवनीयपदार्थानुभविताऽन्य आत्मपदार्थोऽस्तीति चेत्तस्यापि कश्चिदनुभविताऽपेक्षित इति चेदुच्यते—

**स्वयमेवानुभवत्वाद्यद्यप्येतस्य नानुभाव्यत्वम् ।**
**सकृदप्यभावशङ्का न भवेद्बोधस्वरूपसत्तायाः ॥ १६ ॥**

**स्वयमिति ।** स्वयमेव स्वस्यात्मनोऽनुभवरूपत्वाद्यद्यपि तस्यात्मनो-ऽनुभाव्यत्वमनुभवगोचरत्वं नास्तीत्येतावता सकृदप्येकस्मिन्नपि काले-ऽभावशङ्का आत्मनो नास्तीत्येवंप्रकारा न भवेन्न जायेत । बोधस्वरूपस-त्ताया ज्ञानस्वरूपविद्यमानत्वस्य कालत्रयेऽपि ज्ञानस्वरूपत्वेनात्मनोऽभावो न संभवति । जगदान्ध्यप्रसङ्गादित्यर्थः ॥

अनुभवस्वरूपस्यात्मनोऽनुभाव्यत्वं न भवतीति दृष्टान्तप्रदर्शने-नोच्यते—

अनुभवति विश्वमात्मा विश्वेनासौ न चानुभूयेत ।
न खलु प्रकाश्यतेऽसौ विश्वमशेषं प्रकाशयन्भानुः ॥ १७ ॥

अनुभवतीति । आत्मानुभवस्वरूपो विश्वं सर्वं तदनुभवति जानाति । विश्वेन सर्वजगताऽसौ आत्मा न चानुभूयेत अनुभवगोचरी न क्रियेत । अविद्याकार्यत्वाद्विश्वस्य । खलु निश्चयार्थमव्ययम् । तत्र दृष्टान्तः । भानू रविर्विश्वं जगदशेषं समस्तं प्रकाशयन्भासयन्विश्वेन जगताप्यसौ न प्रकाश्यते प्रकाश्यस्याविद्यारूपत्वात् । तस्मादनुभवप्रकाशरूपत्वात्कालत्रयेऽप्यात्मनोऽभावशङ्का न भवतीत्यर्थः ॥

इदानीं जिज्ञास्यब्रह्मणः स्वरूपमाह—

तदिदं तादृशमीदृशमेतावत्तावदिति च यत्र भवेत् ।
ब्रह्म तदित्यवधेयं नोचेद्विषयो भवेत्परोक्षं च ॥ १८ ॥

तदिदमिति । तत्परोक्षं इदमपरोक्षं तादृशमनुमानगोचरमीदृशं प्रत्यक्षविषयस्वरूपमेतावदेतावत्परिमाणं तावत्तावत्परिमाणं यद्ब्रह्म न भवेन्न भवति तर्हि ब्रह्म कथमवधेयमित्याकाङ्क्षायामाह—ब्रह्मेति । ब्रह्मात्मस्वरूपं तदित्यवधेयं ज्ञातव्यं यदुक्तप्रकारं 'तदिदं तादृशमीदृशमेतावत्तावदिति च यत्र भवेदि'त्युक्तं तद्ब्रह्मावधेयमिति यत्तदोः संबन्धः । नोचेदन्यथा विषयो भवेत्प्रमाणविषयत्वं स्याद्ब्रह्मणः परोक्षत्वं च । तस्मात्सर्वप्रमाणावभासकं ब्रह्मेत्यर्थः ॥

इदानीमित्याद्याकारेण स्फुरिते वस्तुनि बाध्यमाने यद्वस्तु स्फुरति स आत्मेत्याह—

इदमिदमिति प्रतीते वस्तुनि सर्वत्र बाध्यमानेऽपि ।
अनिदमबाध्यं तत्त्वं सत्त्वादेस्तस्य न च परोक्षत्वम् ॥१९॥

ननु सर्वोपाधिविलये सति किमपि नावशिष्यत इति चेत्तत्राह—

**सति सकलदृश्यबाधे न किमप्यस्तीति लोकसिद्धं चेत् ।
यत्र किमपीति सिद्धं ब्रह्म तदेवेति वेदतः सिद्धम् ॥२२॥**

**सतीति ।** सकलदृश्यबाधे सति न किमप्यस्तीति यल्लोकसिद्धं चेदस्तुनाम । यत्र किमपीति सिद्धं न किमपीत्यनेन शब्देन प्रतिपादितं तद्ब्रह्म वेदत उपनिषद्वाक्यैः सिद्धं प्रतिपादितम् । यल्लोके किमपि नावशिष्यते सर्वबाधे तदुपनिषद्वाक्यैरस्तीति प्रतिपाद्यत इत्यर्थः ॥

पञ्चकोशविवेकेन तत्साक्षितयात्मा पृथक् प्रतिपादितः । इदानीं पञ्चकोशविवेचकानामपि तत्त्वमस्यादिवाक्यार्थज्ञानेन विना आत्मबोधो न भवतीत्याह—

**एवमपि विरहितानां तत्त्वमसीत्यादिवाक्यचिन्तनया ।
प्रतिभात्येव परोक्षवदात्मा प्रत्यक्प्रकाशमानोऽपि ॥२३॥**

**एवमपीति ।** एवं पञ्चकोशविचारयुक्तानामपि तत्त्वमस्यादिवाक्यचिन्तया विचारेण विरहितानां वाक्यविचारशून्यानामेवः प्रत्यक्षोऽप्यात्मा परोक्षवत्प्रतिभाति । सम्यङ् भातीत्यर्थः । प्रत्यक्प्रकाशमानोऽपि सर्वत्र सर्वदा भासमानोऽपि वाक्यार्थविचाराभावान्न भातीत्यर्थः ॥

तस्माद्वाक्यविचारः कर्तव्य इत्याह—

**तस्मात्पदार्थशोधनपूर्वकवाक्यस्य चिन्तयन्नर्थम् ।
देशिकदयाप्रभावादपरोक्षयति क्षणेन चात्मानम् ॥२४॥**

**तस्मादिति ।** तस्माद्यतो वाक्यविचारेण विनात्मज्ञानं न संभवति तस्माद्धेतोर्वाक्यविचारस्यावश्यकत्वात्तस्य च पदार्थज्ञानार्थत्वात् पदार्थशोधनपूर्वकं वाक्यार्थं चिन्तयन्विचारयन्नधिकारी क्षणेनात्मानं-

परोक्षयति साक्षात्करोति। केवलं स्वबुद्ध्यैव वाक्यविचारादात्मानुभवो न भवति, किंतु देशिककृपाप्रभावाद्गुरुकरणासामर्थ्याद्भवति। गुरुमुखतो विचारे क्रियमाणे आत्मलाभो भवति नान्यथेति भावः॥

इदानीं पदार्थज्ञानाधीनत्वाद्वाक्यज्ञानस्येत्युक्तमतो पदार्थविचारमाह—

**देहेन्द्रियादिधर्मानात्मन्यारोपयन्नभेदेन।**
**कर्तृत्वाद्यभिमानी बोधः स्यात्त्वंपदस्य वाच्योऽर्थः॥२५॥**

**देहेन्द्रियादिधर्मानिति।** तत्र प्रथमस्तत्त्वमसीति वाक्ये पदत्रयं तत्त्वमसीति। तत्र त्वपदस्यार्थद्वयं वाच्यो लक्ष्यश्चेति। तत्र प्रथमतस्त्वंपदवाच्यार्थं दर्शयति—देहेन्द्रियादिधर्मानित्यादिना। देहेन्द्रियादिधर्मान्स्थूलत्वकृशत्वदेहधर्मान्काणत्वबधिरत्वादीन्द्रियधर्मानात्मनि क्षेत्रज्ञे आरोपयन्नभेदेन तादात्म्येनाध्यसन्स्थूलोऽहं कृशोऽहमित्याकारेण देहधर्मारोपः काणोऽहं बधिरोऽहमित्याकारेणेन्द्रियधर्मारोपः एवमारोपपूर्वकं कर्तृत्वाद्यभिमानी यो बोधः चिदाभासकोशाध्यारोपपूर्वकं कर्ताहमित्यभिमानात्मको यो बोधः स्याद्बोधो भवति स त्वंपदस्य वाच्योऽर्थः। एवं शबलार्थमित्यपि च वदन्ति॥

इदानीं त्वपदस्य लक्ष्यार्थमाह—

**देहाहन्तेन्द्रियाणां साक्षी तेभ्यो विलक्षणत्वेन।**
**प्रतिभाति योऽत्र बोधः प्रोक्तोऽसौ त्वंपदस्य लक्ष्योऽर्थः॥२६॥**

**देहाहन्तेन्द्रियाणामिति।** देहाहन्तेन्द्रियाणां शरीराहङ्कारकरणानां साक्ष्यथ च तेभ्यो देहादिभ्यो विलक्षणत्वेन तद्भिन्नत्वेन योऽवबोधः प्रतिभासतेऽसौ त्वंपदस्य लक्ष्योऽर्थः। देहाद्युपाधिरहितत्वाल्लक्ष्यमित्यर्थः॥

इदानीं तत्पदस्यार्थं विभजते—

**वेदावसानवाचा संवेद्यं सकलजगदुपादानम् ।**
**सर्वज्ञताद्युपेतं चैतन्यं तत्पदस्य वाच्योऽर्थः ॥ २७ ॥**

वेदावसानवाचेति । वेदावसानवाचोपनिषद्वाक्यैः यत्संवेद्यं ज्ञेयं ब्रह्म सकलजगदुपादानं प्रपञ्चकारणमथ च सर्वज्ञताद्युपेतं सर्वज्ञत्वादिलक्षणं चैतन्यं चिद्रूपं तत्पदस्य वाच्योऽर्थः जगत्कारणं ब्रह्म । सर्वज्ञत्वोपाधिविशिष्टत्वादित्यर्थः ॥

इदानीं तत्पदस्य लक्ष्यार्थमाह—

**विविधोपाधिविमुक्तं विश्वातीतं विशुद्धमद्वैतम् ।**
**अक्षरमनुभववेद्यं चैतन्यं तत्पदस्य लक्ष्योऽर्थः ॥ २८ ॥**

विविधोपाधिविमुक्तमिति । विविधोपाधिविमुक्तं कर्तृत्वलक्षणोपाधिरहितं विश्वातीतं प्रपञ्चरहितं विशुद्धमज्ञानरहितमत एवाद्वैतं द्वैतरहितं अक्षरं विनाशरहितमनुभववेद्यमनुभवगम्यं यच्चैतन्यमात्मस्वरूपं तत्पदस्य लक्ष्योऽर्थः ॥

एवं पदार्थे विवेचिते सति वाक्यार्थबोधः सामानाधिकरण्यत्रितयज्ञानेन विना न भवत्यतो सामानाधिकरण्यत्रितयं दर्शयति—

**सामानाधिकरण्यं तदनु विशेषणविशेष्यता चेति ।**
**अथ लक्ष्यलक्षकत्वं भवति पदार्थात्मनां च संबन्धः॥२९॥**

सामानाधिकरण्यमिति । सामानाधिकरण्यं नामैकार्थनिष्ठत्वं तत्त्वंपदयोः तदनु तदनन्तरं विशेषणविशेष्यता । विशेषणविशेष्यता नाम पदार्थयोर्विशेषणविशेष्यभावः । लक्ष्यलक्षकत्वं । लक्ष्यलक्षकत्वं नामात्मनो लक्ष्यलक्षणभावः । एवं त्रिविधः सम्बन्धः ॥

इदानीं सामानाधिकरण्यस्य स्वरूपमाह—

**एकत्रवृत्तिरर्थे शब्दानां भिन्नवृत्तिहेतूनाम् ।**
**सामानाधिकरण्यं भवतीत्येवं वदन्ति लाक्षणिकाः ॥३०॥**

**एकत्रवृत्तिरिति ।** भिन्नप्रवृत्तिहेतूनां भिन्नार्थनिष्ठानां शब्दानां नैकस्मिन्नर्थे वृत्तिं वर्तनं सामानाधिकरण्यं सामानाधिकरण्यशब्दवाच्यं भवतीत्येवं लाक्षणिका लक्षणाप्रतिपादका वदन्ति ॥

इदानीं तत्त्वमसीत्यस्मिन्वाक्ये लक्षणां विना बोधो न भवत्यतो लक्षणाया आवश्यकत्वमित्याह—

**प्रत्यक्षत्वपरोक्षत्वं परिपूर्णत्वसद्वितीयत्वम् ।**
**इतरेतरं विरुद्धं न तदिह भवितव्यमेव लक्षणया ॥ ३१ ॥**

**प्रत्यक्षत्वपरोक्षत्वमिति ।** प्रत्यक्षत्वपरोक्षत्वयोरनयोर्भावः परिपूर्णत्वसद्वितीयत्वयोरपि तथा भावात् । इदं द्वयं परस्परं विरुद्धं सहानवस्थानात् तर्हि लक्षणया भवितव्यं तत्त्वंपदयोरर्थे एव विरुद्धांशं सद्वितीयार्थं त्यागेनाखण्डार्थबोधाय लक्षणा स्वीकर्तव्येत्यर्थः ॥

इदानीं लक्षणास्वरूपमाह—

**मानान्तरोपरोधे मुख्यार्थस्यापरिग्रहे जाते ।**
**मुख्या विनाकृतेऽर्थे या वृत्तिः सैव लक्षणा प्रोक्ता ॥ ३२ ॥**

**मानान्तरोपरोध इति ।** मानान्तरोपरोधे प्रमाणान्तरव्यभिचारे मुख्यार्थस्य प्रतिपाद्यार्थस्यापरिग्रहे जाते सति मुख्याविनाकृतेऽर्थे मुख्यासम्बन्धेऽर्थे पदानां या वृत्तिर्वर्तनं सैव लक्षणा प्रोक्ता । लक्षणाप्रतिपाद्यैरित्यर्थः । लक्षणास्वरूपमुक्तं वाक्यप्रकाशे—'मुख्यार्थबाधे त

योगे रूढितोऽर्थप्रयोजनात् । अन्योऽर्थो लक्ष्यते यस्या लक्षणा प्रोच्यते बुधैः ॥' इति ॥

सा च लक्षणा त्रिविधा जहत्, अजहत्, जहदजहद्भेदादित्याह । तत्र प्रथमतो जहल्लक्षणामाह—

**निखिलमपि वाच्यमर्थं त्यक्त्वा वृत्तिस्तदन्वितेऽन्यार्थे ।**
**जहतीति लक्षणा स्याद्गङ्गायां घोष इतिवदत्र न ग्राह्या ३३**

**निखिलमपीति ।** निखिलमपि समग्रमपि वाच्यं पदवाच्यमर्थं त्यक्त्वा तदन्विते वाच्यार्थान्वितेऽन्यार्थे भिन्नार्थे या पदस्य वृत्तिः सा जहल्लक्षणेत्युच्यते । कुत्र सा जहल्लक्षणा भवतीत्याह । गङ्गायां घोष इत्यत्र यथा । इयं जहल्लक्षणा तत्त्वमसीति पदयोर्न ग्राह्या । अत्र समग्रपदार्थत्यागाभावात्पदार्थैकदेशग्रहणात्सा न संभवतीति भावः ॥

इदानीमजहल्लक्षणामाह—

**वाच्यार्थमत्यजन्त्या यस्या वृत्तेः प्रवृत्तिरन्यार्थे ।**
**इयमजहतीति कथिता शोणो धावतिवदत्र न ग्राह्या ३४**

**वाच्यार्थमिति ।** वाच्यार्थं पदयोस्समर्थमत्यजन्त्या अजहत्या यस्या वृत्तेः शक्तेरन्यार्थे वाच्यादन्यार्थे भिन्नार्थे या वृत्तिर्वर्तनं साऽजहतीति लक्षणा कथिता । अलंकारिकैरित्यर्थः । तस्या उदाहरणमाह—शोणो धावतिवदिति । शोणो धावतीत्यत्र शोणगुणस्य धावनासंभवात्तद्गुणाश्रयग्रहणाच्छोणगुणस्यात्यागादियमजहतीयं लक्षणाऽसिन्नात्र्येन ग्राह्या । वाच्यार्थस्यात्यागात् ॥

इदानीं जहदजहल्लक्षणामाह—

**जहदजहतीति सा स्याद्या वाच्यार्थैकदेशमपहाय ।**
**बोधयति चैकदेशं सोऽयं द्विज इतिवदाश्रयेदेनाम् ३५**

**जहदजहतीति ।** वाच्यार्थस्य त्यागाल्लक्ष्यार्थस्य ग्रहणात् या वाच्यार्थैकदेशं वाच्यार्थलक्षणो य एकदेशस्तमपहाय त्यक्त्वा एकदेशं बोधयति, लक्ष्यार्थलक्षणमेकदेशं बोधयति सा जहदजहल्लक्षणा । तस्या उदाहरणं सोऽयं द्विज इति । सोऽयं देवदत्त इत्यत्र तदेतद्देशकालवैशिष्ट्यपरित्यागेन देवदत्तस्वरूपमात्रस्य ग्रहणादेनां जहदजहल्लक्षणामाश्रयेदह्रीकुर्यात् ॥

तामेव लक्षणां प्रतिपादयति—

**सोऽयं द्विज इति वाक्यं त्यक्त्वा परोक्षापरोक्षदेशाद्यम् ।**
**द्विजमात्रलक्षकत्वात्कथयत्यैक्यं पदार्थयोरुभयोः ॥ ३६॥**

**सोऽयमिति ।** सोऽयं द्विज इति वाक्यं सोऽयं देवदत्त इति वाक्यं त्यक्त्वा हित्वा परोक्षापरोक्षं देशाद्यं तत्कालैतत्कालतद्देशैतद्देशविशिष्टत्वं हित्वा द्विजमात्रलक्षकत्वाद्देवदत्तस्वरूपमात्रज्ञापकत्वात्पदार्थयोरैक्यं स्वरूपमात्रं कथयति । अखण्डार्थबोधकत्वादियमत्र ग्राह्येत्यर्थः ॥

प्रतिपादितां जहदजहल्लक्षणां तत्त्वमस्यादिवाक्ये योजयति—

**तद्वत्तत्त्वमसीति त्यक्त्वा परोक्षापरोक्षतादीनि ।**
**चिद्वस्तु लक्षयित्वा बोधयति स्पष्टमसिपदेनैक्यम् ॥३७॥**

**तद्वदिति ।** तद्वत्सोऽयं देवदत्त इति वाक्यवत्तत्त्वमसीति वाक्यमपि परोक्षापरोक्षत्वादीनि तत्पदगतं परोक्षत्वं त्वंपदगतमपरोक्षत्वं च त्यक्त्वा हित्वाऽथ च चिद्वस्तु लक्षयित्वा चैतन्यस्वरूपमात्रं लक्षयित्वाऽसिपदेन स्पष्टमसंदिग्धमैक्यं तत्पदत्वंपदार्थयोरैक्यं बोधयति ॥

दर्शितप्रकारेण वाक्यार्थबोधकत्वं फलं दर्शयति—

**इत्थं बोधितमर्थं महता वाक्येन दर्शितेन ।**
**अहमित्यपरोक्षयतां वेदो वेदयति वीतशोकत्वम् ॥ ३८॥**

**इत्थमिति ।** इत्थमुक्तमितिप्रकारेण बोधितमर्थं वाक्यार्थं दर्शितैक्येन वाक्येन तत्त्वमस्यादिवाक्येन अहमिति दर्शितं चैतन्यस्वरूपमात्मतत्त्वं तदहमस्मीत्यपरोक्षयता साक्षात्कुर्वतामधिकारिणा वीतशोकत्वं शोकरहितत्वं महान्तं वेद उपनिषद्भाग वेदयति बोधयति । एवं वाक्यार्थज्ञाने सति अविद्यानिवृत्तिरानन्दावाप्तिश्च भवतीत्यर्थः ॥

ननु विधिवचसामेव प्रवर्तकत्वं न तत्त्वमस्यादिवाक्यानां, निष्पन्नार्थवादित्वेऽप्रवर्तकत्वादित्याशङ्क्यते—

**प्रायः प्रवर्तकत्वं विधिवचसां लोकवेदयोर्दृष्टम् ।**
**सिद्धं बोधयतोऽर्थं कथमेतद्भवति तत्त्वमस्यादेः ॥३९॥**

**प्राय इति ।** प्राय बहुधा प्रवर्तकत्वं प्रवृत्तिजनकत्वं विधिवचसां विधिवाक्यानां लोकवेदयो लौकिकवाक्ये वेदवाक्ये च दृष्टं सिद्धमर्थं बोधयतः ब्रह्मस्वरूपमर्थं प्रकाशयतः तत्त्वमस्यादेर्वाक्यस्य कथमेतद्भवति । एतत्प्रवर्तकत्वं न सम्भवतीत्यर्थः ॥

इत्याक्षेप उत्तरमाह—

**विधिरेव न प्रवृत्तिं जनयत्यभिलषितवस्तुबोधोऽपि ।**
**राजा भवति सुतोऽभूदिति बोधेन प्रवर्तते लोकः ॥४०॥**

**विधिरिति ।** विधिरेव विधिवाक्यमेव प्रवृत्तिं जनयतीति न विधिरेव प्रवर्तक इति न, किंतु अभिलषितवस्तुबोधोऽभीप्सितपदार्थज्ञानमपि प्रवर्तयति । अभिलषितबोधस्य प्रवर्तकत्वं दृष्टान्तेन आह— राजेति । राजा भवति सुतोऽभूदिति बोधेन लोकः स्वयमेव प्रवर्तते, राजा भवतीति बोधे राजदर्शनादिप्रवृत्तिर्लोकस्य स्वयमेव भवति,

प्रवर्तकवाक्याभावेऽपि मुक्तोऽभूदित्यत्रापि ज्ञानकर्मादौ प्रवर्तते । न स्याद्विधिवाक्यमेव प्रवर्तकमिति नेति भाव ॥

इदानीं विधिविलक्षणैरपि तत्त्वमस्यादिवाक्यैः केवलैर्गुरुकृपां विना मसाक्षात्कारो न भवतीत्याह—

ऐक्यपरैः श्रुतिवाक्यैरात्मा शश्वत्प्रकाशमानोऽपि ।
देशिकदयाविहीनैरपरोक्षयितुं न शक्यते पुरुषैः ॥ ४७ ॥

ऐक्यपरैरिति । ऐक्यपरत्वण्डार्थप्रतिपादकैर्वाक्यैस्तत्त्वमस्यादिवाक्यैः शश्वन्निरन्तरं प्रकाशमानोऽपि स्वरूपेण भासमानोऽप्यात्मा देशिकदयाविहीनैर्गुरुकृपारहितैः पुरुषैरपरोक्षयितुं साक्षात्कर्तुं न शक्यते न पार्यते पुरुषैः । गण्डितैरपीत्यर्थः । गुर्वनुग्रहलभ्यैव ब्रह्मविद्या, सर्वैर्निगदितत्वात् ॥

इदानीं कर्मोपासनादिभिः स्वतन्त्र शुद्धाधिकारी वाक्यार्थविचारेण स्वयमेवात्मसाक्षात्कारवान्भवति, किं गुरुणेत्याह—

विरहितकाम्यनिषिद्धो विहितानुष्ठाननिर्मलस्वान्तः ।
भजति स्वयमेव बोधं गुरुणा किमिति त्वया न मन्तव्यम् ॥

विरहितकाम्यनिषिद्ध इति । विरहितकाम्यनिषिद्धस्त्यक्तकाम्यनिषिद्धकर्मा विहितानुष्ठाननिर्मलस्वान्तः नित्यनैमित्तिककर्माचरणनिर्मलान्तःकरणोऽधिकारी स्वयमेव बोधं भजत्यात्मसाक्षात्कारवान् भवति । गुरुणा किं गुरोः किं प्रयोजनम् । 'ज्ञानेन्तु कारणं सम शिष्यप्रज्ञैव केवलम्' इति नमिष्टोक्तेश्चेति त्वया आक्षेपकर्त्रैव न मन्तव्यं न नेयम् ॥

इदानीं कर्मभिरेव चित्तशुद्धिद्वारा बोधो भवतीत्युक्तं तन्निराकरोति—

**कर्मभिरेव न बोधः प्रभवति गुरुणा विना दयानिधिना ।**
**'आचार्यवान्हि पुरुषो वेदे'त्यर्थस्य वेदसिद्धत्वात् ॥ ४३ ॥**

**कर्मभिरिति** । कर्मभिरेव नित्यनैमित्तिककर्मादिभिरेव बोध आत्मसाक्षात्कारो न भवति न जायते । दयानिधिना कृपासमुद्रेण गुरुणा विना 'श्रोत्रियं ब्रह्मनिष्ठं' [इत्यादि]विशेषणविशिष्टेनाचार्येण विना न संभवति । कुत आचार्यवान्पुरुषो गुरूपसदनवान्वेद जानातीत्यर्थस्य वेदसिद्धत्वात् 'आचार्यवान्पुरुषो वेद' इति श्रुतेरित्यर्थः ॥

ननु सर्वप्रमाणाविषये प्रमात्रबोधे वाग्रूपस्य वेदस्य कथं प्रामाण्यं 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इति श्रुतेरित्याशङ्क्याह—

**वेदोऽनादितया वा यद्वा परमेश्वरप्रणीततया ।**
**भवति परमं प्रमाणं बोधो नास्ति स्वतश्च परतो वा ॥४४॥**

**वेदोऽनादितयेति** । वेदो ऋग्यजुःसामाथर्वणभेदरूपः अनादितया उत्पत्तिरहितत्वेन यद्वा परमेश्वरप्रणीततया वा ईश्वरनिःश्वासरूपेणाभिव्यक्तत्वेन वा 'एतस्य महतो भूतस्य निःश्वसितमेतदृग्वेद' इति श्रुतेः । परमं प्रमाणं भवति सर्वप्रमाणश्रेष्ठं भवति । ब्रह्मबोधकत्वात् । उपनिषद्वाक्यप्रमाणव्यतिरेकेण स्वतः परतो वा स्वबुद्ध्या परतोऽन्यप्रमाणादिना वा बोध आत्मसाक्षात्कारो नास्तीत्यर्थः ॥

ननु वेद आत्मबोधे प्रमाणमस्तु प्रमाणान्तरसापेक्षमप्यस्त्वनुमानवत् अनुमानस्य प्रत्यक्षोपजीवकत्वादित्याकाङ्क्षायामाह—

**नापेक्षते यदन्यद्यदपेक्षन्तेऽखिलानि मानानि ।**
**वाक्यं तन्निगमानां मानं ब्रह्माद्यतीन्द्रियावगतौ ॥४५॥**

**नापेक्षत इति ।** नापेक्षते नाकाङ्क्षति यच्छ्रुत्याख्यं प्रमाणं अन्यप्रमाणान्तरं तस्याप्यपेक्षा प्रमाणान्तराणां नास्तीति चेदखिलानि मानानि सर्वप्रमाणानि यदपेक्षन्ते आकाङ्क्षन्ति तन्निगमानां वाक्यं प्रमाणभूतं ब्रह्माद्यतीन्द्रियावगतौ आत्मावगत्यादिशब्देन स्वर्गावगतौ च मानं अतीन्द्रिये ब्रह्माद्यवगमे वाक्यसदृशं प्रमाणं नास्तीत्यर्थः ॥

इदानीं प्रमाणान्तरबोधकबोधे मानान्तरापेक्षा नास्तीत्याह—

**मानं प्रबोधयन्तं प्रबोधमानेन ये बुभुत्सन्ते ।**
**एधोभिरेव दहनं दग्धुं वाञ्छन्ति ते महात्मानः ॥४६॥**

**मानमिति ।** मानं प्रमाणं बोधयन्तं प्रमाणानामपि बोधकं बोधं ज्ञानं ये मन्दा मानेन प्रमाणेन बुभुत्सन्ते बोद्धुमिच्छन्ति तेऽज्ञा एधोभिरिन्धनैरेव दहनं दग्धुं वाञ्छन्ति दाहकस्य दाहेन दाहं कर्तुमिच्छन्ति ते मुग्धा अतिशयेन महात्मानस्तेऽत्यन्तं विज्ञा इति सोपहासवचनम् । सर्वप्रकाशकसूर्यस्य यथान्यप्रकाशापेक्षा नास्ति तद्वदात्मनोऽपि बोधरूपस्य बोधान्तरापेक्षा नास्तीत्यर्थः ॥

ननु वेदस्योत्पत्तिमत्त्वेऽनादिब्रह्मबोधकत्वं कथमित्याकाङ्क्षायामाह—

**वेदोऽनादिरमुष्य व्यञ्जक ईशः स्वयंप्रकाशात्मा ।**
**तदभिव्यक्तिमुदीक्ष्य प्रोक्तोऽसौ सूरिभिः प्रमाणमिति ॥४७**

वेद इति । वेदोऽनादिरादिरहित उत्पत्तिरहित अमुष्य वेदस्य ईशो व्यञ्जक प्रकाशक । यथा स्वत सिद्धस्य घटादेर्व्यञ्जक चक्षुस्तद्वत् । ननु ईश्वरस्यापि तथा परप्रकाश्यत्व स्यादत आह—स्वपमिति । ईश्वरस्तु स्वयस्वरूपेण प्रकाशात्मा प्रकाशस्वरूप एव न तु प्रकाश्य । तदभिव्यक्तिमुद्दिश्येश्वराभिव्यक्तित्व प्रकृतत्वमुत्प्रेक्ष्य ज्ञात्वा सूरिभि पूर्वाचार्यैरसौ वेद प्रमाणमिति प्रोक्त कथित ॥

इदानीं दृष्टान्तप्रदर्शनेनामानबोध प्रति वेदस्यैव प्रामाण्य नान्यस्येति साधयति—

रूपाणामवलोके चक्षुरिवान्यत्र कारणं दृष्टम् ।
तद्वददृष्टावगतौ वेदवदन्यो न वेदको हेतुः ॥ ३८ ॥

रूपाणामिति । रूपाणा नीलपीतादीनामवलोके दर्शने चक्षुरिव नेत्रेन्द्रियमिवान्यत्र कारणमन्यदिन्द्रिय न कारण दृष्टम् । अन्य कारण नास्तीत्यर्थ । तद्वच्चक्षुरिन्द्रियवददृष्टावगतौ अननुभूतावगतौ स्वर्गादौ वा वेदवद्वेदसदृशोऽन्यो वेदको हेतुर्बोधहेतुर्नास्ति न तिष्ठति ॥

ननु निगमाना यथा स्वत प्रामाण्य तथा तन्त्राणामप्यस्त्वित्याशङ्कायामाह—

निगमेषु निश्चितार्थं तन्त्रेषु कश्चिदपि प्रकाशयति ।
तदिदमनुवादमात्रं प्रामाण्यं तस्य सिद्ध्यति न किंचित् ४०

निगमेष्विति । निगमेषु वेदेषु निश्चितार्थं प्रमाणीकृतार्थं कश्चिदाचार्य तन्त्रेषु शास्त्रेषु प्रकाशयति प्रतिपादयति तदिद तत्प्रतिपादन-

१ महदुपाधिर्न मति यदर्थबोधकत्वं तत्प्रमाण

मनुवादमात्र 'उक्तस्यैवार्थस्य(?) प्रशंसावचनमनुवादोऽवधारितः' इत्युक्तत्वादनुवादस्य प्रामाण्यं न। किंचित्। न किमपि प्रमाणत्वमित्यर्थः ॥

वेदः प्रमाणमित्युक्तं तस्यांशद्वयं तत्कार्यं चेदानीं दर्शयति—

**अंशद्वयवति निगमे साधयति द्वैतमेक एवांशः।**
**अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोऽंशः ॥ ५० ॥**

**'अंशद्वयवतीति।** अंशद्वयवति भागद्वययुक्ते निगमे वेदे एकोंशः प्रथमो भागः द्वैतं साधयति भेदं प्रतिपादयति। कर्तृकर्मफलादिरूपमद्वैतमेव वस्तु ब्रह्मस्वरूपं सर्वभेदरहितमपरोंश उपनिषद्भागः प्रतिपादयति। प्रसिद्धं सर्वानुभवगोचरमिति वस्तुविशेषणम्।

तत्र द्वैताद्वैतयोः प्रमाणभूतवेदप्रतिपाद्ययोः कस्य सत्यत्वं कस्यासत्यत्वमित्याकाङ्क्षायामाह—

**अद्वैतमेव सत्यं तस्मिन्द्वैतं न सत्यमध्यस्तम्।**
**रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ५१**

**अद्वैतमिति।** अद्वैतमेव सत्यं यदद्वैतं वस्तु ब्रह्मस्वरूपं तदेव सत्यं तस्मिन्नद्वैते द्वैतं प्रपञ्चरूपमसत्यं मिथ्याभूतमध्यस्तमारोपितम्। तत्र दृष्टान्तः। यथा शुक्तिकायां रजतं रौप्यं मृगतृष्णायां मरीचिकायां चोदकस्फुरणमुदकभानं तद्वदित्यर्थः ॥

ननु वैपरीत्यमेव कुतो न भवति, द्वैतेऽद्वैतारोप इत्याकाङ्क्षायामाह—

**आरोपितं यदि स्यादद्वैतं वस्त्ववस्तुनि द्वैते।**
**युक्तं नैव तदा स्यात्सत्येऽध्यासो भवत्यसत्यानाम् ॥५२॥**

**आरोपितमिति ।** आरोपितमध्यस्तं यदि चेदद्वैतं वस्तु सत्यस्वरूपं द्वैतेऽसत्ये तदा तस्मिन्पक्षे युक्तं न स्यात् । वस्त्वभावात्सत्येऽध्यासो वस्तुस्वरूपे आरोपोऽस्माकं भवति। तस्य वस्तुरूपत्वादित्यर्थः॥

ननु सत्यासत्ययोरुभयोरप्यारोपणमुभयविलक्षणवस्तुनि स्यादित्याकाङ्क्षायामाह—

**यद्यारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिदभावः ।**
**आरोपणं न शून्ये तस्माद्द्वैतसत्यता ग्राह्या ॥ ५३ ॥**

**यद्यारोपणमिति ।** यदि चेदारोपणमध्यास उभयोः सत्यासत्ययोस्तदा तद्व्यतिरिक्तस्योभयविलक्षणपदार्थस्य कस्यचित्पदार्थस्याभावः । अन्यपदार्थो नास्तीत्यर्थः । ननूभयविलक्षणं शून्यमस्ति, तत्र कुतोऽध्यासो न भवतीत्याह—आरोपणमिति । शून्ये वस्तुनि आरोपणं कस्यचिन्न भवति यत्तस्माद्द्वैतसत्यताऽद्वैतवस्तुनः सत्यता ग्राह्या। अङ्गीकर्तव्येत्यर्थः॥

एवंभूते द्वैतवस्तुनि श्रुतिरेव प्रमाणमित्याह—

**प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् ।**
**द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वात् ॥ ५४ ॥**

**प्रत्यक्षेति ।** प्रत्यक्षाद्यनवगतं प्रत्यक्षादिप्रमाणैरनवगतमध्यस्तेतरस्वरूपमद्वैतं ब्रह्म श्रुत्यैव प्रतिपादनीयं तर्हि द्वैतमपि श्रुत्यैव प्रतिपादनीयमित्याकाङ्क्षायामाह—द्वैतमिति । द्वैतं न प्रतिपाद्यं श्रुत्या किमिति तस्य द्वैतस्य स्वयमेव स्वभावत एव लोकसिद्धत्वात् । लोकैरेवाविद्यावृतैः प्रतिपादितत्वादित्यर्थः ॥

मनुवादमात्रं 'उक्तस्यैवार्थस्य(?) प्रशंसावचनमनुवादोऽवधारितः' इत्युक्तत्वादनुवादस्य प्रामाण्यं न । किञ्चित् । न किमपि प्रमाणत्वमित्यर्थः ॥

वेदः प्रमाणमित्युक्तं तस्यांशद्वयं तत्कार्यं चेदानीं दर्शयति—

अंशद्वयवति निगमे साधयति द्वैतमेक एवांशः ।
अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोऽशः ॥ ५० ॥

'अंशद्वयवतीति । अंशद्वयवति भागद्वययुक्ते निगमे वेदे एकोंशः प्रथमो भागः द्वैतं साधयति भेदं प्रतिपादयति । कर्तृकर्मफलादिरूपमद्वैतमेव वस्तु ब्रह्मस्वरूपं सर्वभेदरहितमपरोंश उपनिषद्भागः प्रतिपादयति । प्रसिद्धं सर्वानुभवगोचरमिति वस्तुविशेषणम् ।

तत्र द्वैताद्वैतयोः प्रमाणभूतवेदप्रतिपाद्ययोः कस्य सत्यत्वं कस्यासत्यत्वमित्याकाङ्क्षायामाह—

अद्वैतमेव सत्यं तस्मिन्द्वैतं न सत्यमध्यस्तम् ।
रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ५१

अद्वैतमिति । अद्वैतमेव सत्यं यदद्वैतं वस्तु ब्रह्मस्वरूपं तदेव सत्यं तस्मिन्नद्वैते द्वैतं प्रपञ्चरूपमसत्यं मिथ्याभूतमध्यस्तमारोपितम् । तत्र दृष्टान्तः । यथा शुक्तिकायां रजतं रौप्यं मृगतृष्णायां मरीचिकायां चोदकस्फुरणमुदकभानं तद्वदित्यर्थः ॥

ननु वैपरीत्यमेव कुतो न भवति, द्वैतेऽद्वैतारोप इत्याकाङ्क्षायामाह—

आरोपितं यदि स्यादद्वैतं वस्त्ववस्तुनि द्वैते ।
युक्तं नैव तदा स्यात्सत्येऽध्यासो भवत्यसत्यानाम् ॥५२॥

**आरोपितमिति ।** आरोपितमध्यस्तं यदि चेदद्वैतं वस्तु सत्यस्वरूपं द्वैतेऽसत्ये तदा तस्मिन्पक्षे युक्तं न स्यात् । वस्त्वभावात्सत्येऽध्यासो वस्तुस्वरूपे आरोपोऽसत्यानां भवति। तस्य वस्तुरूपत्वादित्यर्थः॥

ननु सत्यासत्ययोरुभयोरप्यारोपणमुभयविलक्षणवस्तुनि स्यादित्याकाङ्क्षायामाह—

**यद्यारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिदभावः ।**
**आरोपणं न शून्ये तस्मादद्वैतसत्यता ग्राह्या ॥ ५३ ॥**

**यद्यारोपणमिति ।** यदि चेदारोपणमध्यास उभयोः सत्यासत्ययोस्तदा तद्व्यतिरिक्तस्योभयविलक्षणपदार्थस्य कस्यचित्कस्याप्यभावः । अन्यपदार्थो नास्तीत्यर्थः । ननूभयविलक्षणं शून्यमस्ति, तत्र कुतोऽध्यासो न भवतीत्याह—आरोपणमिति । शून्ये वस्तुनि आरोपणं कस्यचिन्न भवति यत्तस्मादद्वैतसत्यताऽद्वैतवस्तुनः सत्यता ग्राह्या । अङ्गीकर्तव्येत्यर्थः ॥

एवंभूते द्वैतवस्तुनि श्रुतिरेव प्रमाणमित्याह—

**प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् ।**
**द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वात् ॥ ५४ ॥**

**प्रत्यक्षेति ।** प्रत्यक्षाद्यनवगतं प्रत्यक्षादिप्रमाणैरनवबोध्यमेवंरूपमद्वैतं यत्र श्रुत्यैव प्रतिपादनीयं तर्हि द्वैतमपि श्रुत्यैव प्रतिपादनीयमित्याकाङ्क्षायामाह—द्वैतमिति । द्वैतं न प्रतिपाद्यं श्रुत्या किंनिमित्तं तस्य द्वैतस्य स्वयमेव स्वभावत एव लोकसिद्धत्वात् । लोकैरेवाविद्वद्भिः प्रतीयमानत्वादित्यर्थः ॥

ननु श्रुतिरद्वैतमेव प्रतिपादयति न द्वैतमित्याशङ्कायामाह—

**अद्वैतं सुखरूपं दुःखं द्वैतं सदा भवेद्द्वैतम् ।**
**यत्र प्रयोजनं स्यात्प्रतिपादयति श्रुतिस्तदेवासौ ॥ ५५ ॥**

**अद्वैतमिति ।** अद्वैतं सुखरूपमद्वैतस्य सुखरूपत्वाभासस्य प्राणिनः सुखमेवेष्टं न दुःखमिति । द्वैतं तु दुःखसह दुःखमसत्यं यत् सदा भवेत् निरन्तरं भवति तस्माद्यत्र प्रयोजनं स्याद्यत्रापेक्षा भवति तदेव प्रतिपादयति दर्शयति असौ श्रुतिः । तत्त्वमस्यादीनि वेदान्तवाक्यानीत्यर्थः ॥

इदानीमद्वैतानन्दरूपस्य ब्रह्मणो जीवत्वमपि स्वाभाविकमित्याशङ्कते—

**निगमगिरा प्रतिपाद्यं वस्तु यदानन्दरूपमद्वैतम् ।**
**स्वाभाविकस्वरूपं जीवत्वं तस्य केचन ब्रुवते ॥ ५६ ॥**

**निगमेति ।** निगमगिरोपनिषद्वाक्यैः प्रतिपाद्यं सिद्धान्तितं यदानन्दरूपमानन्दघनमद्वैतं वस्तु ब्रह्म तस्य जीवत्वं स्वाभाविकं स्वरूपं जीवस्वरूपतापि स्वत एवेति केचन पण्डितमन्या वदन्ति । अनिर्धारितार्थ ॥

इदानीं यद्यद्वितीयब्रह्मणः स्वत एव जीवत्वमिति तन्निराकरोति—

**स्वाभाविकं यदि स्याज्जीवत्वं तस्य विशदविज्ञप्तेः ।**
**सकृदपि न तद्विनाशं गच्छेदुष्णप्रकाशवद्वह्नेः ॥ ५७ ॥**

**स्वाभाविकमिति ।** तस्य ब्रह्मणः विशदविज्ञप्तेः निर्मलज्ञानरूपस्य जीवत्वं यदि स्वाभाविकं स्वत एव स्यात्तर्हि तज्जीवत्वं जीवस्वभावत्वं सकृदपि कदाचिदपि विनाशं निराकरणमद्वैतबोधेन न ग

-त्वेन प्राप्नुयात् । स्वाभाविकधर्मस्य दुर्निवार्यत्वाद्यथा वह्नेरुष्णप्रकाश स्वभावत्वमनिवार्यं तद्वदित्यर्थः ॥

निराकृतमपि ब्रह्मणो जीवत्वं सत्यमेवेति यद्यपि जीवः साधनैर्ब्रह्मोपासनादिभिस्तद्रूपत्वं प्राप्नोतीत्याशङ्कते—

यद्वदयो रसविद्धं काञ्चनतां याति तद्वदेवासौ ।
जीवः साधनशक्त्या परतां यातीति केचिदिच्छन्ति॥५८॥

यद्वदिति । यद्यथा अयः लोहधातु रसविद्धं सत्केनचिद्रसेन पारदेन वौषधिरसेन वानुप्रविष्टं काञ्चनतां याति सुवर्णरूपं भवति तद्वदसौ जीवः साधनशक्त्या त्वन्या परतां याति प्राप्नोति इति केचिदिच्छन्ति कैश्चिदाशङ्क्यते सिद्धान्तानभिज्ञत्वात् ॥

इदानीं जीवः साधनशक्त्या परतां यातीत्यपि मतं निराकरोति—

तदिदं भवति न युक्तं गतवति तस्मिंश्चिरेण रसवीर्ये ।
प्रतिपद्यते प्रणाशं हेम्नो वर्णोऽप्ययःसमारूढः ॥ ५९ ॥

तदिदमिति । तदिदं मतं न युक्तं युक्तिसिद्धं न भवति । पुनः प्रथमतो दृष्टान्तमेव प्रतिपादितं दूषयति । रसवीर्येण रसशक्त्या यावज्जन्यं गतं स्तोद् चिरेण चिरकालेन रसवीर्यं गतवति नष्टे सति हेमो वर्णः सुवर्णरूपत्वं अयः समारूढोऽपि गतः प्रणाशं प्रतिपद्यते प्राप्नोति । पुनरप्यय स्वरूपता प्राप्नोतीत्यर्थः ॥

दार्ष्टान्तिकेऽपि साधितमर्थं निराकरोति—

जीवत्वमपि तथेदं चतुर्विधसुखदुःखलक्षणोपेतम् ।
गतमिव साधनशक्त्या प्रतिमात्येव प्रयाति न विनाशमद॰

**जीवत्वमपीति ।** जीवत्वमपि जीवस्वरूपमपि इद तथाऽयोदृष्टान्त यद्वहुविधमुरवदु स्वलक्षणोपेतमनेकप्रकारमुखयुतमेतादृश साधनशक्त्या हृत्या गतमिव नष्टमिव प्रतिभात्येव परतु विनाश न प्रयाति । न नश्यतीत्यर्थ ॥

इदानी जीवस्य स्वतो जीवत्वेऽङ्गीक्रियमाणे दोषमाह—

**तस्मात्स्वतो यदि स्याज्जीवः सततं स एव जीवः स्यात् ।**
**एवं यदि परमात्मा परमात्मैवायमिति भवेद्युक्तम् ॥६१॥**

**तस्मादिति ।** तस्मात्कारणाद्यदि चेज्जीव स्वत स्वभावत जीवरूपेण स्यात् स सतत निरतर स जीव एव स्यात् । तस्य स्वरूपतो न जीवत्वनिवृत्तिन स्यादित्यर्थ । एवमनेन प्रकारेण यदि चेत्परमात्मा स्यात्तर्हि परमात्मैवायमिति भवेद्युक्त सगतम् । स्वरूपतोऽथ परमात्मैव उपाधिवशाज्जीवत्व प्राप्त उपाधिलये परमात्मस्वरूप एवेत्यर्थ ॥

इदानी सरूपतापक्ष निराकरोति—

**यदि वा परेण साम्य जीवश्चेद्भजति साधनबलेन ।**
**कालेन तदपि कियता नश्यत्येवेति निश्चितं सकलैः॥६२॥**

**यदिवेति ।** यदिवा पक्षान्तरेणाथ जीव साधनबलेनोपासनादिबलेन परेण परमात्मना साम्य सरूपता भजति प्राप्नोति चेत्तदपि साम्यमपि कियता कालेन साधनशक्तिनाशावधि कालेन नश्यत्येवेति सकलै प्राचीनैर्निश्चित निर्णीतम् । यत्कृतक तन्नश्यत्येवेत्यर्थ ॥

इदानीं यथोक्तलक्षणगुरुपूर्वकवेदान्तश्रवणादिना ब्रह्मस्वरूपता संपादनीयेत्याह—

**तस्मात्परं स्वकीयं मोहं मोहात्मकं च संसारम् ।**
**स्वज्ञानेन जहित्वा पूर्णः स्वयमेव शिष्यते नान्यत् ॥६३॥**

**तस्मादिति ।** तस्मात्परं दुर्निवारं स्वकीयं संबन्धिनं मोहमविद्याख्यं मोहात्मकं मोहस्वरूपं संसारं च जीवत्वलक्षणं स्वज्ञानेन स्वात्मावबोधेन जहित्वा दूरीकृत्य पूर्णः सर्ववस्तुस्थितोऽद्वैतात्मस्वरूपः स्वयमेव स्वरूपेणैवावशिष्यते नान्यत्तदतिरिक्तं किंचिन्नावशिष्यते । सर्वप्रपञ्चविलापनेन ब्रह्मस्वरूपमेवावतिष्ठतीत्यर्थः ॥

ननु प्रपञ्चविलापनेन ब्रह्मस्वरूपमेवावशिष्यत इत्यत्र किं प्रमाणमित्यत आह—

**सत्यज्ञानानन्दं प्रकृतं परमात्मरूपमद्वैतम् ।**
**अवबोधयन्ति निखिलाः श्रुतयः स्मृतिभिः समं समस्ताभिः**

**सत्यज्ञानानन्दमिति ।** सत्यज्ञानानन्दं सत्यज्ञानानन्दस्वरूपं प्रकृतं ज्ञेयं परमात्मरूपमद्वैतं द्वैतरहितमेवंलक्षणं निखिलाः समस्ता उपनिषच्छ्रुतयः समस्ताभिः स्मृतिभिः सहिता बोधयन्ति प्रतिपादयन्ति॥

इदानीमेकत्वबोधकानामुपनिषद्वाक्यानामवान्तरवाक्यान्यस्मिन्नर्थेऽभिधीयन्त इत्याह—

**एकत्वबोधकानां निखिलानां निगमवाक्यजालानाम् ।**
**वाक्यान्तराणि सकलान्यभिधीयन्तेस्म शेषभूतानि ॥६५॥**

**एकत्वेति ।** एकत्वबोधकानामद्वैतप्रतिपादकानां निगमवाक्यानामुपनिषद्वाक्यानां शेषभूतान्यवशिष्टान्यङ्गान्यङ्गभूतानि वाक्यान्तराण्येकत्वप्रतिपादकान्यभिधीयन्तेस्म उच्यन्तेस्म । वेदेन सूत्रकारादिभिर्वाक्यान्तर-

इदानीं ब्रह्मस्वरूपातिरिक्तं घर्मादिवस्तुजातं किमपि नास्ति येन संबन्धाद्यपेक्षा स्यादित्याह—

**कर्तृ च कर्म च यस्य स्फुरति ब्रह्मैव तन्न जानाति ।**
**यस्य न कर्तृ न कर्म स्फुटतरमयमेव वेदितुं क्रमते ॥७३॥**

कर्त्रिति । कर्तृनाम कर्तृत्वं । चकारो भ्रार्थः । कर्म च कर्मरूपं वा यस्य स्फुरति स ब्रह्मैव कर्तृकर्मस्फुरणरूपत्वात् । कर्तृकर्म ब्रह्म न जानाति । तस्यावस्तुत्वादित्यर्थः । यस्य ब्रह्मणः कर्तृकर्म किमपि नास्ति स ब्रह्मरूपः अयमात्मैव स्फुटतरं वेदितुं ज्ञातुं क्रमते उपक्रमते ॥

ननु नहि कर्तृत्वप्रपञ्चस्य का गतिरित्यत आह—

**कर्तृत्वादिकमेतन्मायाशक्त्या प्रतीयते निखिलम् ।**
**इति केचिदाहुरेषा भ्रान्तिर्ब्रह्मातिरेकतो नान्यत् ॥७४॥**

कर्तृत्वादिकमिति । कर्तृत्वादिकं कर्तृत्वभोक्तृत्वादिकं सन्मायाशक्त्यात्मनि प्रतीयते निखिलं सममिति केचिदाहुः । केचिद्वादिन एवमाहुस्तेषामेषा कल्पनारूपा भ्रान्तिः कुतः ब्रह्मातिरेकतो ब्रह्मव्यतिरिक्ततयान्यत्किमपि नास्ति 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन' इत्यादिश्रुतेः ॥

एवमद्वैतात्मब्रह्मज्ञाने सति सर्वं ज्ञानं भवतीत्याह—

**तस्मिन्ब्रह्मणि विदिते विश्वमशेषं भवेदिदं विदितम् ।**
**कारणमृदि विदितायां घटकरकाद्या यथावगम्यन्ते॥७५॥**

तस्मिन्निति । तस्मिञ्श्रुतिप्रतिपादितेऽद्वैते ब्रह्मणि विदिते ज्ञाते सति विश्वं सर्वोऽपि प्रपञ्चः अशेषमनवशेषितं विदितं भवेत् । तत्र दृष्टान्तः—कारणमृदि घटादिकं प्रति कारणीभूताया मृत्तिकायां विदि-

इदानीं ज्ञानशब्दार्थमाह—

**ज्ञानं तदेवममलं साक्षी विश्वस्य भवति परमात्मा ।**
**संबध्यते न धर्मैः साक्षी तैरेव सच्चिदानन्दः ॥ ७१ ॥**

**ज्ञानं तदेवमिति ।** ज्ञानं ज्ञानशब्दवाच्यं तदेव सर्वानुभवसिद्धं मत्र यो विश्वस्य साक्षी जगतो ज्ञाता परमात्मा ब्रह्मस्वरूपः स ज्ञानं भवति स ज्ञानरूप आत्मा साक्षी तैर्धर्मैरविद्यापरिकल्पितैर्न संबध्यते । अविद्यापरिकल्पितत्वात् । अत एव सच्चिदानन्दः सच्चिदानन्दरूपः स साक्ष्येव द्रष्टैव न तु धर्मी ॥

ननु ज्ञानरूप आत्मा कल्पितैर्धर्मैर्न संबध्यते चेत्तस्य साक्षित्वं केन संबन्धेनेत्यत आह—

**रज्ज्वादेरुरगाद्यैः संबन्धस्तस्य दृश्यसंबन्धः ।**
**सततमसङ्गोऽयमिति श्रुतिरप्यमुमर्थमेव साधयति ॥७२॥**

**रज्ज्वादेरिति ।** यथा रज्ज्वादेर्वस्तुन उरगाद्यैरारोपितैः संबन्धो न तथा दृश्यसंबन्धः तथात्मनः कर्तृत्वादिधर्मैः संबन्धः दृश्यसंबन्धः । आत्मनो द्रष्टृत्वात् । नन्वन्यः संबन्धः संयोगः समवायो वा कुतो न भवतीत्यत आह—सततमिति । सततं निरन्तरं अयमात्माऽसङ्गः सर्वसंबन्धरहितः । तस्यासङ्गत्वे श्रुतिं प्रमाणयति—श्रुतिरिति । श्रुतिरसङ्गत्वनिरूपणमसङ्गलक्षणमर्थं साधयति प्रतिपादयति एष नेति नेत्यात्मा इत्युपक्रम्य अगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसि इति बृहदारण्यकी श्रुतिः ॥

इदानीं ब्रह्मस्वरूपातिरिक्तं धर्मादिवस्तुजातं किमपि नास्ति येन स यत्साध्यापेक्षः स्यादित्याह—

**कर्तृ च कर्म च यस्य स्फुरति ब्रह्मैव तन्न जानाति।**
**यस्य न कर्तृ न कर्म स्फुटतरमयमेव वेदितुं क्रमते॥७३॥**

**कर्त्रिति।** कर्तृनाम कर्तृत्वं। चकारो नार्थे। कर्म च कर्मत्वं च यस्य स्फुरति स ब्रह्मैव कर्तृकर्मस्फुरणरूपत्वात्। कर्तृकर्म ब्रह्म न जानाति। स्वस्यावस्तुत्वादित्यर्थः। यस्य ब्रह्मणः कर्तृकर्म किमपि नास्ति स ब्रह्मरूपः अयमात्मैव स्फुटतरं वेदितुं ज्ञातुं सम्यक् उपक्रमते॥

ननु तर्हि कर्तृत्वप्रत्ययस्य का गतिरित्यत आह—

**कर्तृत्वादिकमेतन्मायाशक्त्या प्रतीयते निखिलम्।**
**इति केचिदाहुरेषा भ्रान्तिर्ब्रह्मातिरिक्ततो नान्यत्॥७४॥**

**कर्तृत्वादिकमिति।** कर्तृत्वादिकं कर्तृत्वभोक्तृत्वादिकं सर्वं मायाशक्त्या भाति प्रतीयते निखिलं समस्तमिति केचिदाहुः। केचिद्वादिन एवमाहुस्तेषामेषा कल्पनारूपा भ्रान्तिः पुनः ब्रह्मातिरिक्तो ब्रह्मव्यतिरिक्तत्वेनान्यत् किमपि नास्ति 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन' इत्यादिश्रुतेः॥

एवमद्वैतात्मब्रह्मज्ञाने सति सर्वं ज्ञातं भवतीत्याह—

**तस्मिन्ब्रह्मणि विदिते विश्वमशेषं भवेदिदं विदितम्।**
**कारणमृदि विदितायां घटकरकाद्या यथावगम्यन्ते॥७५॥**

**तस्मिन्निति।** तस्मिन्श्रुतिप्रसिद्धेऽद्वैते ब्रह्मणि विदिते ज्ञाते सति विश्वं सर्वोऽपि प्रपञ्चः अशेषसमस्तोऽपि विदितं भवेत्। तत्र दृष्टान्तः—कारणमृदि घटादिकं प्रति कारणीभूतायां मृत्तिकायां विदि-

तायां घटकरकाद्या यथावगम्यन्ते घटकरकादीनि कार्याणि विदितानि मृन्मयत्वेन ज्ञातानि भवन्ति तद्वदित्यर्थः ॥

इदानीं प्रतिपादितं कारणत्वेन यद्ब्रह्म तदेव सर्वस्य कारणं नान्यदित्याह—

**तदिदं कारणमेकं विगतविशेषं विशुद्धचिद्रूपम् ।**
**तस्मात्सदेकरूपान्मायोपहितादभूदशेषमिदम् ॥ ७६ ॥**

**तदिदमिति ।** तदिदं ब्रह्म एकं कारणं कार्यभूतस्य प्रपञ्चस्य । किंलक्षणं कारणं विगतविशेषं विशेषरहितं विशुद्धचिद्रूपं चैतन्यस्वभावं तस्मात्सदेकरूपादसत्यनानात्वरहितान्मायोपहितत्वादशेषं सर्वमिदमिदन्ताकारेणानुभूयमानं विश्वं जगद्भूजातम् । अन्यवादिपरिकल्पितप्रधानादिकारणं न भवतीत्यर्थः ॥

इदानीमसत्कारणवादिपक्षं निराकरोति—

**कारणमसदिति केचित्कथयन्त्यसतो भवेन्न कारणता ।**
**अङ्कुरजननी शक्तिः सति खलु बीजे समीक्ष्यते सकलैः ७७**

**कारणमिति ।** कारणमसदिति केचिद्वादिनः कथयन्ति तन्न संभवति असतः कारणता न भवेत् । तत्र दृष्टान्तः—अङ्कुरजनन्यङ्कुरोत्पादिका शक्तिर्यत्र सत्वेन सद्रूपे बीजे विद्यमाने सकलैर्लोकैः समीक्ष्यतेऽवलोक्यते । असति बीजे नावलोक्यत इत्यर्थः ॥

पुनरप्यसत्कारणवादं निराकरोति—

**कारणमसदिति कथयन्वन्ध्यापुत्रेण निर्वहेत्कार्यम् ।**
**किंच मृगतृष्णिकाम्भः पीत्वोदन्यां महीयसीं शमयेत् ७८**

**कारणमिति ।** कारण प्रपञ्चस्यासदिति कथयन्वादिर्वन्ध्यापुत्रेण कारणीभूतेन कार्यं सत्त्वोत्पत्त्यादिरूपं निर्विहन्साधयेत् । किंच मृगतृष्णिकाम्भः पीन्वोदन्या तृषा महीयसी महती शमयेन्नाशयेत् । वन्ध्यापुत्रमरीचिकानामसत्त्वात्तत्कार्याभाव इत्यर्थः ॥

इदानीमसत्कारणवाद श्रुतियुक्तिभ्यामनुपपन्न इत्याह—

**यस्मात्सोऽयमसतो वादः संभवति शास्त्रयुक्तिभ्याम् ।**
**तस्मात्सदेव तत्त्वं सर्वेषां कारणं भवति जगताम् ॥७९॥**

**यस्मादिति ।** यस्माच्छ्रुतियुक्त्या असत्कारणमासत्त्वात्सोऽयं पूर्वोक्तवाद शास्त्रयुक्तिभ्यां न समनति न घटते । शास्त्रं 'सदेव सोम्येदमग्र आसीत्' इति, युक्ति वन्ध्यापुत्रादिभ्य कार्यानुपपत्ति तस्मादस्मादसत्कारणवादो न घटतेऽतः सदेव सत्स्वरूपमेव तत्त्वं ब्रह्म सर्वेषां जगतां कारणं हेतुरुत्पत्तौ भवति ॥

ननु प्रपञ्चकारणं सद्रूपं ब्रह्मेत्युक्तेऽद्वैतताहानिः स्यादित्याशङ्क्याह—

**जगदाकारतयापि प्रथते गुरुशिष्यविग्रहतयापि ।**
**ब्रह्माद्याकारतयापि प्रतिभातीदं परात्परं तत्त्वम् ॥ ८० ॥**

**जगदाकारतयेति ।** जगदाकारतयापि प्रपञ्चरूपेणापि ब्रह्मैव प्रथते प्रसिद्धिं गच्छति । गुरुशिष्यविग्रहतयापि गुरुशिष्यरूपेणापि तथा ब्रह्माद्याकारतयापि हिरण्यगर्भादिदेवतारूपेणापीदं परात्परं तत्त्वं ब्रह्मस्वरूपं प्रतिभाति । तत्तदाकारतया ब्रह्मैव विवर्तरूपेण भासत इत्यर्थः ॥

इदानीं ब्रह्मैव जगद्विवर्तरूपेण भासते जगत्तद्भिन्नं नास्तीत्युक्तं तत्र केषांचिदविवेकिनां जगत्सत्यं ब्रह्मणः भिन्नमिति भानं जन्ममरणपरम्परायै भवतीत्याह—

**सत्यं जगदिति भानं संसृतये स्यादपक्वचित्तानाम् ।**
**तस्मादसत्यमेतन्निखिलं प्रतिपादयन्ति निगमान्ताः॥८१॥**

**सत्यमिति ।** सत्यं जगदिति भानं जगदपि ब्रह्मणः पृथक्सद्रूपमिति ज्ञानमपक्वचित्तानामद्वैतभावनारहितानां गुरुकरुणाविधुराणां संसृतये जन्ममरणपरम्परायै एव स्याद्भवति । 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति' इति श्रुतेः । तस्माद्भयकारणत्वहेतोरेतत्तदिदं निखिलं जगदसद्ब्रह्मणोऽभिन्नमिति निगमान्ता उपनिषदः प्रतिपादयन्ति बोधयन्ति ॥

इदानीं विशुद्धाधिकारिणां मनः ब्रह्मैवेति वेद बोधयतीत्याह—

**परिपक्वमानसानां पुरुषवराणां पुरातनैः सुकृतैः ।**
**ब्रह्मैवेदं सर्वं जगदिति भूयः प्रबोधयत्येषः॥ ८२ ॥**

**परिपक्वमानसानामिति ।** परिपक्वमानसानां श्रवणमननादिभिस्थिरप्रज्ञानां पुरुषवराणामुत्कृष्टाधिकारिणां पुरातनैः प्राचीनजन्मसम्पादितैः सुकृतैः पुण्यभारैर्हेतुभिः श्रद्धासमभावनायुक्तानामेष वेद उपनिषद्भागः सर्वं समस्तमेतज्जगद्ब्रह्मैवेति प्रतिबोधयति । भूयः बहुधा 'सत्र यत्किंच ब्रह्म' इति श्रुतेर्ब्रह्मातिरिक्तं किंचिदपि नास्तीत्यर्थः ॥

ननु ब्रह्म ब्रह्मैव भाति, वेदाश्च प्रतिपादयन्ति तर्हि सर्वेषां तथा कुतो नावभासत इत्यत आह—

**अनवगतकाञ्चनानां भूषणधीरेव भूषणे हैमे ।**
**एवमविवेकभाजां जगति जनानां न तात्त्विकी धिषणा८३**

अनवगतकाञ्चनानामिति । अनवगतकाञ्चनानां सुवर्णज्ञानवर्जितानां हैमे भूषणे सुवर्णपरिणामे भूषणेऽलङ्कारे भूषणबुद्धिरलङ्कारबुद्धिरेव यथा सुवर्णानतिरिक्तेऽपि सुवर्णबुद्धिर्नास्ति एवं जगल्लोकेऽविवेकभाजां तात्त्विकबुद्धिरहितानां जनानां मनुष्याणां भासमाने ब्रह्मवेद सर्वस्मिन्स्वरूपा धिषणा न भवतीत्यर्थः ॥

इदानीमेतमद्वय ब्रह्मापरोक्षमेव सत् अविवेकिभिः परोक्षमिव प्रतीयत इत्याह—

**अहमालम्बनसिद्धं कस्य परोक्षं भवेदिदं ब्रह्म ।**
**तदपि विचारविहीनैरपरोक्षयितुं न शक्यते मुग्धैः ॥८४॥**

अहमालम्बनसिद्धमिति । अहमालम्बनसिद्धमहमस्म्यहं जानामीत्येवप्रकारकोऽनुभवस्तेन सिद्धं प्रसिद्धं सर्वमनुष्येषु कस्य पुरुषस्येदं ब्रह्म परोक्षं भवेत्र कस्यापि । तदप्येवमपरोक्षमपि श्रुतिविचारविहीनैः श्रुत्यर्थपरिशीलनविधुरैर्मुग्धैरज्ञानावृतैर्ब्रह्मापरोक्षयितुं साक्षात्कर्तुं न शक्यते । विचारविहीनत्वादिति भावः ॥

इदानीं सर्वं ब्रह्मैव चेद्भवति तर्हि लौकिको वा शास्त्रीयो वा व्यवहारो लोकानां कथं सम्भवतीत्याह—

**अहमिदमिति च मतिभ्यां सततं व्यवहरति सर्वलोकोऽपि ।**
**प्रथमाप्रतीचि च रमा निरमति वपुरिन्द्रियादिबाह्येऽर्थे ॥**

अहमिति । अहमिदमिति च मतिभ्यामहंशब्देनास्मत्प्रत्ययगोचरो विषयीदंशब्देन युष्मत्प्रत्ययगोचरो विषयस्तदुभयात्मके बुद्धी ताभ्यां सर्वोऽपि लोकः सततं व्यवहरति सततं व्यवहारं करोति । तत्र बुद्धेर्विषयविभागं दर्शयति—प्रथमेति । प्रथमाहमाकारा बुद्धिः

प्रतीचि प्रत्यगात्मनि वसति, चरमा द्वितीया वपुरिन्द्रियादिबाह्येऽर्थे स्थूलदेहादौ। एवं विषयविषयिणोरितरेतराध्यासं कृत्वा सर्वोऽपि लोको व्यवहरति। यथा चोक्तं सूत्रभाष्ये—'अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार' इति ॥

इदानीं बाह्येऽर्थे स्थूलादौ याऽहंबुद्धिः सा भ्रान्तिरित्याह—

**वपुरिन्द्रियादिविषयाहंबुद्धिश्चेन्महत्यसौ भ्रान्तिः ।**
**अतस्मिंस्तद्बुद्धिरित्यध्यासेन शास्यमानत्वात् ॥ ८६ ॥**

**वपुरिन्द्रियादिविषयेति।** वपुरिन्द्रियादिविषया याऽहंबुद्धिः चेद् यदि भवति सा भ्रान्तिर्मोह एवाध्यास एव। एवंबुद्धेरध्यासत्वं कुत इत्यत आह—अतस्मिन्निति। अतस्मिंस्तद्बुद्धिः अतत्प्रकारकं ज्ञानं यथाऽरजतभूतशुक्तिकादौ रजतबुद्धिः। अध्यासो नाम 'अतस्मिंस्तद्बुद्धिरित्यध्यास' इति भाष्येऽध्यासेनाध्यासलक्षणत्वेन शास्यमानत्वान्निर्दिष्टत्वादित्यर्थः ॥

इदानीमहंबुद्धेरिदमुद्देश्यामन्यध्यस्तात्मादात्मैवाहंबुद्धेरर्थ इत्याह—

**तस्मादशेषसाक्षी परमात्मैवाहमर्थ इत्युचितम् ।**
**अजडवदेव जडोऽयं तत्सम्बन्धाद्भवत्यहङ्कारः ॥ ८७ ॥**

**तस्मादिति।** तस्माद्यतोऽहङ्कारादावात्माध्यस्तमतोऽशेषसाक्षी परमात्मैवाहमर्थः अहंप्रत्ययस्यार्थ इत्युचितं घटते। अजडवदेव चेतन इव जडोऽप्ययमहङ्कारः सम्बन्धाच्चेतनसम्बन्धाद्भवति ॥

इदानीमहंप्रत्ययस्यात्मैवार्थो नान्य इत्याह—

**तस्मात्सर्वशरीरेष्वहमहमित्येव भासते स्पष्टः ।**
**यः प्रत्ययो विशुद्धस्तस्य ब्रह्मैव भवति मुख्योऽर्थः ॥ ८८ ॥**

**तस्मादिति ।** तस्मात्कारणात्सर्वशरीरेष्वहमहमित्येवाहमहप्रकार एव य प्रत्ययज्ञान भासते स्फुट प्रकटो निशुद्ध केवल तस्याहप्रत्ययस्य ब्रह्मैव मुख्योर्थो भवति । न गौण इत्यर्थ ॥

इदानीं ब्रह्मैवाहङ्कारस्य मुख्योऽर्थ इति यदुक्त तदेव दृष्टान्तेन साधयति—

**गोशब्दादिव गोत्वं तदपि व्यक्तिः प्रतीयतेऽर्थतया ।**
**अहमर्थः परमात्मा तद्वद्भ्रान्त्या भवत्यहङ्कारः ॥ ८९ ॥**

**गोशब्दादिति ।** गोशब्दात् गोइत्यय शब्दस्तस्माद्गोशब्दाद्यथा गोत्व सामान्य तथा मुख्योऽर्थस्तदपि गोत्वमप्यर्थतयार्थात्सम्बन्धाद्व्यक्ति प्रतीयते गवाकृतिर्ज्ञायते तद्वदेवमेवाहमर्थ मुख्यपरमात्मा भ्रान्त्याहङ्कारोऽप्यहप्रत्ययस्याप्यर्थो भवतीत्यर्थ ॥

इदानीं भ्रान्त्याहङ्कारोऽप्यहप्रत्ययार्थो भवति, तेन चाहङ्कारेऽपि कर्तृत्वादिधर्मारोपोऽपि भवतीत्याह—

**दग्धत्वादिकमयसः पावकसंगेन भासते यद्वत् ।**
**तद्वच्चेतनसङ्गादहमिति प्रतिभांति कर्तृतादीनि ॥ ९० ॥**

**दग्धत्वादिकमिति ।** दग्धत्वादिक दाहकरणत्व यथाऽयसो लोहस्य पावकसयोगेन भाति वै निश्चये यद्वद्यथा तद्वत्तथा चेतनसङ्गादात्मसम्बन्धादहमित्यहङ्कारेऽपि कर्तृतादीनि कर्तृत्वभोक्तृत्वादीनि प्रतिभान्ति भासन्ते । अध्यासादित्यर्थ ॥

तस्मादात्मैवाहमर्थ इत्येव निरन्तर विभावयेन्नान्यदित्याह—

**देहेन्द्रियादिदृश्यव्यतिरिक्तं निर्मलमतुलमद्वैतम् ।**
**अहमर्थमिति विदित्वा तद्व्यतिरिक्तं न कल्पयेत्किंचित्**

**देहेन्द्रियेति** । देहेन्द्रियादिदृश्यव्यतिरिक्तं शरीरकारणविलक्षणं निर्मलमविद्याक्लेशरहितमतुलं सादृश्यरहितमद्वैतं द्वैतवर्जितं अहमर्थमहं प्रत्ययगोचरं ब्रह्मैवाहमिति विदित्वा ज्ञात्वा तद्व्यतिरिक्तं ब्रह्मातिरिक्तं किञ्चिद्वस्तुजातं न कल्पयेत् । न भावयेदित्यर्थः ॥

इदानीमात्माहंप्रत्ययगोचरत्वेन सर्वशरीरोपाधौ सम एव, तथापि उपाधिभेदादात्मनोऽपि भेदेऽनुभववैचित्र्यं भवतीत्याह—

**यद्वत्सुखदुःखानामवयवभेदादनेकता देहे ।**
**तद्वदिह सत्यभेदेऽप्यनुभववैचित्र्यमात्मनामेषाम् ॥ १७॥**

**यद्वदिति** । यद्वद्यथा सुखदुःखानां सुखदुःखप्रत्ययानामवयवभेदाद्धस्तपादाद्यङ्गभेदादेवास्मिन्देहे शरीरेऽनेकता भवति हस्ते मम सुखं हस्ते मम दुःखं, शिरसि मम सुखं शिरसि मम दुःखमित्यादिप्रकारेण तद्वत्तथा इह संसारेऽभेदे सत्यप्येषामात्मनामनुभववैचित्र्यं सदसदुभयात्मकं भिन्नमभिन्नमित्याद्यनुभववैलक्षण्यं भवतीत्यर्थः ॥

इदानीमेवमनुभववैचित्र्यं प्रपञ्चात्मकं भवति तस्य किं कारणं, किंच रूपमित्यादिविचारोऽपि न कर्तव्यं मायामयत्वादित्याह—

**किमिदं किमस्य रूपं कथमेतदभूदमुष्य को हेतुः ।**
**इति न कदापि विचिन्त्यं चिन्त्यं मायेति धीमता विश्वम् ॥**

**किमिदमिति** । किमिदं प्रपञ्चजालं किं भवति अस्य रूपं च किमिदं कथमभूत्कथं जातम् अमुष्य प्रपञ्चजालस्य को वा हेतुः किं कारणमित्यादि न कदापि चिन्त्यम् । न चान्वेषणीयं धीमता ज्ञानिना । किंतु माययैव मायामात्रमित्येवं विश्वं सर्वं प्रपञ्चजालमधिष्ठानमेव तद्रूपेण स्फुरति । विवर्तरूपेणेत्यर्थः ॥

इदानीं दृष्टान्तेनाभेदं साधयन्नाह—

**दन्तिनि दारुविकारे दारु तिरो भवति सोऽपि तत्रैव ।**
**जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोधत्ते॥९४॥**

दन्तिनीति । दन्तिनि गजे दारुविकारे काष्ठविकृतौ काष्ठं तिरोभवति अन्तर्हितं भवति गजस्वरूपमेव भाति न दारुरूपं । सोऽपि दन्त्यपि तत्रैव दारुण्येवान्तर्भवति दारुरूपमेव भाति न गजस्वरूपं, बालानां व्युत्पन्नानां च गजबुद्धिर्दारुबुद्धिश्चेति, तथा जगति प्रपञ्चे परमात्मा तिरोभवत्यन्तर्हितो भवति जगत्स्वरूपमेव भाति नात्मरूपं, तथा परमात्मन्यप्यात्मरूपे जगत्तिरोभवत्यात्मरूपमेव भाति न जगद्रूपमिति भावः ॥

इदानीमिदं मायामात्रं जगच्चित्रं कुत्र तिष्ठति केन चोत्पादितमित्याकाङ्क्षायामाह—

**आत्ममये महति पटे विविधजगच्चित्रमात्मना लिखितम् ।**
**स्वयमेव केवलमसौ पश्यन्प्रमुदं प्रयाति परमात्मा ॥९५॥**

आत्ममय इति । आत्ममये आत्मस्वरूपे महति व्यापके विस्तीर्णे पटे वस्त्रविशेषे विविधजगच्चित्रं नानारूपं जगल्लक्षणं चित्रं चित्रसदृशमात्मनैव लिखितं । स्वेच्छातूलिकयेत्यर्थः । इदं जगच्चित्रमात्मना स्वस्मिन्स्वयमेव लिखितं स्वयमेवात्मैव पश्यन्नवलोकयन्केवलमवलोकयितृन्तररहितं प्रमुदमानन्दं परमात्मैव स्वयं प्रयाति प्राप्नोति । यथा कश्चिल्लौकिकोऽपि चित्रकारपुरुषः स्वयमेव चित्रमुद्दिश्य स्वकरतलादायत्यन्तरमणीयमिति स्वयमेव पश्यन्नानन्दं प्राप्नोति तद्वत् । यथाचोक्तं योगिनो हृदये—'जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि । स्वयमेव समालोक्य प्रीणाति भगवाञ्छिवः ॥' इति ॥

इदानीं विद्वदनुभवप्रदर्शनेन सर्वं ब्रह्मैव भातीत्याह—

**चिन्मात्रममलमक्षयमद्वयमानन्दमनुभवारूढम् ।**
**ब्रह्मैवास्ति तदन्यन्न किंचिदस्तीति निश्चयो विदुषाम् ॥०६॥**

**चिन्मात्रमिति ।** चिन्मात्रं चैतन्यस्वरूपं अमलं विशुद्धमक्षयम् अनुभवारूढमनुभववेद्यमेनद्दक्षणं ब्र यमद्वयं द्वितीयरहितमानन्दस्वरूपमनुभवारूढमनुभववेद्यमेतदक्षणं ब्र ह्मैवास्ति तिष्ठति, तदन्यद्ब्रह्मान्यन्न किंचिदस्तीति विदुषां तत्त्वज्ञानिनां नि श्चय सिद्धान्तः । तथा चोक्तं वार्तिककारैः—'यदाचिद्व्यवहारे तु द्वैत यद्यपि पश्यति । बोधाभ्यतिरेकेण न पश्यति चिदन्वयात् ॥ किंतु पश्यति मिथ्यैव दिङ्मोहेन्दुविभागवित् ॥' इति ॥

ननु ब्रह्मातिरिक्तं किमपि न भाति चेद्विद्याविद्यादि श्रूयते विभाग तस्य का गतिरित्याशङ्कायामाह—

**व्यवहारस्य दशेयं विद्याविद्येति वेदपरिभाषा ।**
**नास्त्येव तत्त्वदृष्ट्या तत्त्वं ब्रह्मैव नान्यदस्त्यस्मात् ॥०७॥**

**व्यवहारस्येति ।** व्यवहारस्य दशेयं व्यवहरणं व्यवहारः शास्त्रीयगो ष्ठ्यादिसंपादनार्थं विद्याविद्येति ज्ञानाज्ञानात्मिका महती पार भाषा सञ्ज्ञा तत्त्वदृष्ट्या ब्रह्मात्मैकत्वसिद्धान्तदृष्ट्या नास्त्येव तत्त्वं यथार्थ स्वरूपं ब्रह्मैवास्त्यस्माद्ब्रह्मणः सकाशादन्यद्वस्त्वन्तरं नास्ति, 'नेह ना नास्ति किंचन' इत्यादिश्रुतेः ॥

इदानीं ब्रह्मणोऽन्यदपि वस्त्वन्तरमस्तीति मतेऽप्यस्तित्वरूपं ब्रह्मै वोच्यते नास्तिभिरित्याह—

**अस्त्यन्यदिति मतं चेत्तदपि ब्रह्मैव चास्तितारूपम् ।**
**व्यतिरिक्तमस्तितायां नास्तितया शून्यमेव तत्सिद्धम् ॥०८॥**

**अस्तीति ।** अस्त्यन्यद्ब्रह्मणोऽन्यद्वस्त्वन्तरमस्तीति मतं चेद्वादिना तदपि वस्त्वन्तरमप्यस्तित्वरूपेण ब्रह्मैव भवति । अस्तित्वं ब्रह्मणोऽन्यत्र नास्तीत्यर्थः । तर्ह्यस्तित्वव्यतिरिक्तं नास्तिरूपेणान्यद्वस्त्वन्तरमस्तीति चेत्तत्राह—व्यतिरिक्तमिति । व्यतिरिक्तं भिन्नमस्तितायाः अस्तित्वरूपा-न्नास्तितया नास्तित्वं शून्यमेव शून्यरूपत्वमेव तन्नास्तित्वं सिद्धं तद-न्यवादिनामेव गतमित्यर्थः ॥

ननु ब्रह्मातिरिक्तं किमपि न भाति चेद्विदुषां शरीरव्यवहारः कथं संभवतीत्याकाङ्क्षायामाह—

**तत्त्वावबोधशक्त्या स्थिरतया बाधितापि सा माया ।**
**आदेहपातमेषामाभात्यात्माप्ययं निजो विदुषाम् ॥ ९९ ॥**

**तत्त्वावबोधशक्त्येति ।** तत्त्वावबोधशक्त्यात्मैकत्वज्ञानशक्त्या स्थिरतया विक्षेपादिरहितत्वेन बाधितापि सा माया मिथ्यात्वेन तिरस्कृ-तापि सा लोकप्रसिद्धशरीरव्यवहाररूपा माया आदेहपातं मरणावधि एषां विदुषां ब्रह्मनिष्ठानामाभाति मिथ्यात्वेनाभासते आत्मापि निज-स्वस्वरूपोऽद्वयानन्दसत्यसत्यरूपेण भाति प्रकाशते ॥

ननु शरीरपातपर्यन्तं विदुषामविदुषां च समप्रपञ्चभानं चेद्विदुषां को विशेष इत्यत आह—

**एष विशेषो विदुषां पश्यन्तोऽपि प्रपञ्चसंसारम् ।**
**पृथगात्मनो न किंचित्पश्येयुः सकलनिगमनिर्णीतात् ॥ १०० ॥**

**एष इति ।** एष अयं विशेषो विदुषां ज्ञानिनां प्रपश्यन्तोऽपि चक्षु-रादीन्द्रियैर्व्यवहरन्तोऽपि सन्तः प्रपञ्चसंसारं मायिकं व्यवहारमात्मनः पृथगात्माभिन्नं किंचित्किमपि न पश्येयुः । सकलनिगमनिर्णीतात्सर्वो-पनिषद्वाक्यैर्निश्चितात्स्वात्मनः सकाशादन्यत्र भावयतीत्यर्थः ॥

इदानीमेवमद्वैतवासनया स्थितानां ब्रह्मनिष्ठानां ज्ञातव्यकर्तव्यत्वादि धर्मजातं नास्तीत्याह—

**किं चिन्त्यं किमचिन्त्यं किं कथनीयं किमप्यकथनीयम् ।**
**किं कृत्यं किमकृत्यं निखिलं तदिति जानतां विदुषाम् १**

**किमिति ।** किं किंचित्पदार्थजातं चिन्त्यं विचारणीयं किं किमप्यचिन्तनीयमपि किमपि कथनीयं विधेयेषु किं किमप्यकथनीयं गोप्यमत्यन्तरहस्यमपि किं किंचित्कृत्यं कर्तव्यं किं किमप्यकर्तव्यं वा नास्ति । निखिलं सर्वं ब्रह्मेति विजानता ज्ञानवता विदुषा तत्त्वज्ञानिना देहेन्द्रियाद्यध्यासाभावादात्मकामत्वादिति श्रुतेः 'कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकाम' इति श्रुतेरित्यर्थः ॥

इदानीं तादृशानां तत्त्वज्ञानिनां बन्धमोक्षादिव्यवहारोऽपि नास्तीत्याह—

**निखिलं दृश्यविशेषं दृग्रूपत्वेन पश्यतां विदुषाम् ।**
**बन्धो नापि न मुक्तिर्न च परमात्मत्वमपि न जीवत्वम् २**

**निखिलमिति ।** निखिलं सर्वं दृश्यविशेषमध्यारोपितपदार्थजातं दृग्रूपत्वेन दृक्चैतन्यस्वरूपत्वेन पश्यतामवलोकयतां विदुषां ज्ञानिनां न बन्धः नापि मुक्तिः न च परमात्मत्वमीश्वरत्वं न वा जीवत्वं जीवस्वरूपत्वं वा किमस्तीति । किमपि नास्तीत्यर्थः ॥

इदानीं यत्प्रतिपादितं ब्रह्मात्मैकत्वज्ञानं तदेव सर्वासामुपनिषदां तात्पर्यं प्रमाणभूतमित्याह—

**असकृदनुचिन्तितानामव्याहततरनिजोपदेशानाम् ।**
**प्रामाण्यं परसीम्नां निगमनमिदमेव निखिलनिगमानाम् ३**

**असकृदिति ।** असकृदनुचिन्तितानां पुनःपुनर्विचारितानां भावनागोचरीकृतानां अव्याहततरनिजोपदेशानां अव्याहतो बोधितो निजोपदेशः स्वार्थो येषां तेषां निगमानामुपनिषद्भागानां परमसीमा सकलप्रमाणावधिभूतानामिदमेव यदुक्तमात्मैक्यं तदेव प्रामाण्यं निगमेन प्रतिज्ञादिपञ्चावयवैः प्रतिपादितस्यार्थस्य तस्मात्तथेतिवचनं निगमेनं सर्ववेदान्तसिद्धान्तोऽयमेवेत्यर्थः ॥

इदानीमवशिष्टेन ग्रन्थेन ब्रह्मनिष्ठेन देशिकेनात्मस्वरूपतां नीतः शिष्यो गुरुचरणसरोजेऽभिवन्द्य स्वानुभवारूढं सर्वात्मकत्वं प्रमुदितमना वाचाऽविष्कारेत्याह—

**इत्थं निबोध्य गुरुणा शिष्यो हृष्यन्प्रणम्य तं पदयोः ।**
**स्वानुभवसिद्धमर्थं स्वयमेवान्तर्विचारयामास ॥ ४ ॥**

**इत्थमिति ।** इत्थं निबोधित इत्युक्तप्रकारेणोपदिष्टो गुरुणाचार्येण शिष्योऽधिकारी हृष्यन्प्रमुदितमनाः तं गुरुं पदयोश्चरणसरोजयोः प्रणम्य नमस्कारं कृत्वा स्वानुभवसिद्धमर्थं साक्षात्कृतब्रह्मस्वरूपतालक्षणं स्वयमेवान्तर्बुद्धौ विचारयामास । मननगोचरीकृतवानित्यर्थः ॥

इदानीं स्वस्य सर्वात्मकत्वं प्रकटयति—

**अजरोऽहमक्षरोऽहं प्राज्ञोऽहं प्रत्यगात्मबोधोऽहम् ।**
**परमानन्दमयोऽहं परमशिवोऽहं भवामि परिपूर्णः ॥ ५ ॥**

१ जीवः परस्मान्न भिद्यत इति प्रतिज्ञा । आदिपदेन हेतुदृष्टान्तयोर्ग्रहणं सच्चिदानन्दलक्षणत्वाद्धेतुः व्यतिरेकीदृष्टान्तः यत्रैवं तत्रैवं यत्सच्चिदानन्दलक्षणं न भवति तद्ब्रह्म न भवति यथा घटः.

२ हेतूपसंहार उपनयः पक्षे साध्योपसंहारो निगमनम्.

३ आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यस्तेन सोच्यते.

**एकोऽहमेतदीदृशमेवमिति स्फुरितभेदरहितोऽहम् ।**
**यष्टव्योऽहमनीहैरन्तःसुकृतानुभूतिरहितोऽहम् ॥ १२ ॥**

**एक इति ।** एक सजातीयभेदरहित एतदिदमीदृशमेन प्रकारमेवमित्यादि यत्स्फुरित मनस कल्पनाजाल तदेतद्भेदरहितोऽहमेव । अनीहै फलेच्छारहितैर्यष्टव्य यज्ञेषु यजनीय अत सुकृतानुभूतिरहित अन्तरन्तःकरणे सुकृतानुभूति पुण्यानुभवलक्षणा तद्रहितोऽहमेव ॥

**ऐक्यावभासकोऽहं वाक्यपरिज्ञानपावनमतीनाम् ।**
**ऐशमहमेव तत्त्व नैशतमःप्रायमोहमिहिरोऽहम् ॥ १३ ॥**

**ऐक्यावभासक इति ।** ऐक्यावभासक ऐक्य एकत्व तस्यावभासक प्रकाशक वाक्यपरिज्ञानपावनमतीना महावाक्यार्थपरिज्ञान ब्रह्मस्वभावबोधस्तेन पावना निशुद्धा मतिर्येषा तेषा ऐशमहमेव तत्त्व स्वभावस्वरूप नैशतम प्रायमोहमिहिर निशासबन्धि यत्तमो घनान्धकारस्तत्प्राय तत्सदृशो यो मोहोऽज्ञान तस्योच्छेदकमिहिर सहस्रभानुरहमेव ॥

**ओजोऽहमौषधीनामोतप्रोतायमानभुवनोऽहम् ।**
**ओङ्काररसारसोल्लसदात्मसुखामोदमत्तभृङ्गोऽहम् ॥ १४ ॥**

**ओजोऽहमिति ।** औषधीनामोज सर्वासामोषधीना तेज ओतप्रोतायमानभुवन आयतायामरूपेण व्याप्तानि भुवनानि येन सोऽहमोङ्काररसारसोल्लसदात्मसुखामोदमत्तभृङ्गोऽह ओङ्कार एव सारस कमल तस्मादुल्लसन्य आत्मसुखामोद तोषलक्षणस्तेन मत्तो विस्मृताहङ्कृतिरहमेव ॥

**औपधमहमशुभानामौपाधिकधर्मजालरहितोऽहम् ।**
**औदार्यातिशयोऽहं चित्तविविधचतुर्वर्गतरणपरोऽहम् १५**

**औपधमिति ।** अशुभानां पापरूपाणामौपधमुन्मूलनकरमहमेव । औपाधिकधर्मजालरहितोहं उपाधिकृतमविद्योत्पादितं यद्धर्मजालं प्रप-ञ्चलक्षणं तद्रहितोऽहमेव । औदार्यातिशयो दानातिशयः चित्तविवि-धचतुर्वर्गतरणपरः मनःकल्पितबहुप्रकारको यश्चतुर्वर्गः धर्मादिपुरुषार्थ-समूहस्तस्य यत्तरणं संपादनं तत्परः । तत्साधनपरोऽहमेवेत्यर्थः ॥

**अङ्कुशमहमखिलानां महत्तया मत्तवारणेन्द्राणाम् ।**
**अम्बरमिव विमलोऽहं शम्बररिपुरिव जातविकृतिरहितोहम्**

**अङ्कुशमिति ।** महत्तया मत्तवारणेन्द्राणामहमङ्कुशः. महत्तया वयं महान्त इति महत्त्वेनोत्कृष्टत्वेन मत्ता मदोन्मत्ता ये वारणेन्द्रा इव गज-धौरेया इव तेषामखिलानां समस्तानामङ्कुशं तेषां मदापहारकः अम्बर-मिवाकाशमिव विमलोऽहं शम्बररिपुरिव शिव इव जाता या विकृतिः विकारस्तेन रहितोऽहमेव ॥

**आत्मविकल्पमतीनामस्खलदुपदेशगम्यमानोऽहम् ।**
**अस्थिरसुखविमुखोऽहं सुस्थिरसुखबोधसंपदुचितोऽहम् १७**

**आत्मविकल्पमतीनामिति ।** आत्मनि आत्मविषये विकल्पम-तीनामात्माहं भवामि वा न भवामि वेति विकल्पबुद्धीनां अस्खलदुपदे-शगम्यमानः अस्खलनमचलनं निश्चितो य उपदेशस्तेन गम्यमानो बुद्ध्य-मानोऽस्थिरसुखविमुखः अस्थिरं चलं यद्विषयसुखं तद्रहित. सुखबोध-संपदुचितः सुखरूपो यो बोधः ज्ञानं तस्य या संपत्समृद्धिस्तदुचितो योग्योऽहमेव ॥

**करुणारसभरितोऽहं कवलितकमलासनादिलोकोऽहम् ।**
**कलुषाहङ्कारविलक्षणोऽहं कल्मषसुकृतोपलेशरहितोऽहम् १८**

**करुणारसेति ।** करुणारसभरितः कृपामृतपूर्णः कवलितकमलासनादिलोकः कवलितो व्याप्तः कमलासनादिलोकः ब्रह्मलोकः अहमेव कलुषाहङ्कारविलक्षणो मलिनाहङ्कृतिरहितः कल्मषसुकृतोपलेशरहितः कल्मषं पापं सुकृतं पुण्यं तदुभयोपलेशः संसर्गः तद्रहितोऽहमेव ॥

**खानामगोचरोऽहं खातीतोऽहं खपुष्पभवगोऽहम् ।**
**खलजनदुरासदोऽहं खण्डज्ञानोपनोदनपरोऽहम् ॥ १९ ॥**

**खानामिति ।** खानामिन्द्रियाणामगोचरोऽविषयः खातीत इन्द्रियातीत आकाशादिभूतातीतो वा खपुष्पभवगः आकाशपुष्पप्रायो यो भवः संसारस्तस्मिन्वर्तमानोऽहमेव ॥

**गलितद्वैतकथोऽहं देही भवदखिलमूलहृदयोऽहम् ।**
**गन्तव्योऽहमनीहैर्गत्यागतिरहितपूर्णबोधोऽहम् ॥ २० ॥**

**गलितेति ।** गन्तव्योहमनीहैः अनीहैः फलाशारहितैर्गन्तव्यः प्राप्यः गत्यागतिरहितपूर्णबोधः उत्पत्तिविनाशरहितो यः पूर्णबोध आत्मस्वरूपलक्षणः सोहमेव ॥

**घनतरमोहतिमिरप्रकरप्रध्वंसनभानुनिकरोऽहम् ।**
**घटिकावासररजनीसंवत्सरयुगकल्पकालभेदोऽहम् ॥२१॥**

**घनतरेति ।** घनतरो निबिडतरो यो मोहः स एव तिमिरमन्धकारस्तस्य यः प्रकरः व्याप्तिस्तस्य प्रध्वसनो नाशकः यो भानुनिकरः किरणसमूहः घटिकावासररजनीसंवत्सरयुगकल्पकालभेदः घटिकाकल्पान्तो यः कालभेदः सोऽहमेव ॥

चरदचरात्मकोऽहं चतुरमतिश्लाघ्यचरितोऽहम् ।
चपलजनदुर्गमोऽहं चलभवजलधिपारदेशोऽहम् ॥ २२ ॥

चरदचरात्मक इति । चरदचरात्मकः स्थावरजङ्गमात्मकः चतुरमतिश्लाघ्यचरितः नैपुण्ययुद्धिभिः श्लाघ्यचरितः स्तुत्याचरणः चपलजनदुर्गमः चपलजनाः विषयचपला ये जनास्तैर्दुर्गमो दुरापः चलभवजलधिपारदेशोऽस्थिरससारवारिधेर्यः पारदेशः मोक्षलक्षणः सोऽहमेव ॥

छन्दःसिन्धुनिगूढज्ञानसुखाह्लादमोदमानोऽहम् ।
छलपदविहितमतीनां छन्नोऽहं शान्तिमार्गगम्योऽहम् २३

छन्दःसिन्धुनिगूढेति । छन्दो वेदः स एव सिन्धुः महोदधिस्तस्मिन्निगूढं गुप्तं यज्ज्ञानसुखं तस्माज्जातो य आह्लादस्तेन मोदमानः प्रमुदितः छलपदविहितमतीनां छलं नाम स्वजयार्थमन्यथार्थकल्पनं न-यवाक्यच्छलवाग्जालं इत्यस्मिन्नाशये यथान्यार्थकल्पनं तस्य यत्पदं तत्र निहिता निवेशिता मतिर्येषां तेषां छन्नोऽज्ञातः शान्तिमार्गगम्यो दुःखफलादिरहितो यो मार्गः समाधायस्तेन गम्यः प्राप्योऽहमेव ॥

जलजासनादिगोचरपञ्चमहाभूतमूलभूतोऽहम् ।
जगदानन्दकरोऽहं जन्मजरारोगमरणरहितोऽहम् ॥ २४ ॥

जलजासनादीति । जलजासनो ब्रह्मा स आदिर्येषां तेषां ब्रह्मविष्णुमहेशानां गोचरीभूता आकाशादिपञ्चमहाभूतानां मूलभूतः प्ररोहस्थानं जगदानन्दकरो जगति लोकत्रये आनन्दकरः सुखदाता जन्मजरारोगरहितः षड्भावविकाररहितोऽहमेव ॥

झङ्कृतिहुङ्कृतिशिञ्जितबृंहितमुखविविधनादभेदोऽहम् ।
झटितिघटितात्मवेदनदीपपरिस्फुरितहृदयभवनोऽहम् २५

**फणधरभूधरचारणविग्रहविधृतप्रपञ्चसारोऽहम् ।**
**भालतलोहितलोचनपावकपरिभूतपञ्चबाणोऽहम् ॥३२॥**

**फणधरेति** । फणधरादीनां ये विग्रहास्तैर्विधृतो यः प्रपञ्चः तस्य सारः भालत(?)लोहितलोचनपावकपरिभूतपञ्चबाणोऽहमेव स्पष्टम् ॥

**बद्धो भवामि नाहं बन्धान्मुक्तस्तथापि नैवाहम् ।**
**बोध्यो भवामि नाहं बोधोऽहं नैव बोधको नाहम्॥३३॥**

**बद्ध इति** । अहं बद्धो न भवामि पाशाष्टकेन बद्धो न 'घृणा लज्जा भय शङ्का जुगुप्सा चेति पञ्चमी । कुलं शीलं च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः ॥ पाशबद्धः स्मृतो जीवः पाशमुक्तः सदाशिवः ॥' इति तन्त्रोक्तपाशाः अत एव बन्धान्मुक्तोऽपि न भवामि बोध्यः तत्त्वसाक्षात्कारेण न भवामि बोध्यो न भवामि वृत्तिज्ञानं न । बोधकः बोधकर्तापि न भवाम्यहम् ॥

**भक्तिरहं भजनमहं मुक्तिरहं मुक्तियुक्तिरहमेव ।**
**भूतानुशासनोऽहं भूतभवद्भव्यमूलभूतोऽहम् ॥ ३४ ॥**

**भक्तिरिति** । भक्तिः भगवद्रूपा वृत्तिः । तदुक्तं भक्तिरसायने—'तत्वेयं भगवद्धर्मद्वारा वाहकतां गता । सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥' इति । भजनमर्चनादिभिरुपासनं मुक्तिर्ब्रह्मानन्दावाप्तिरविद्यानिवृत्तिलक्षणा मुक्तियुक्तिर्मुक्तिबोधनप्रकारः भूतानुशासनः सर्वेषां भूतानां शिक्षकः भूतभव्यभवन्मूलभूतः जातजायमानजनिष्यमाणस्य प्रपञ्चस्य मूलभूतः कारणमहमेव ॥

**मान्योऽहमस्मि महतां मन्दमतीनाममाननीयोऽहम् ।**
**मदरागमानमोहितमानसदुर्वासनादुरापोऽहम् ॥ ३५ ।**

**मान्य इति ।** मान्य पूज्य महता मान्यानामपि मन्दमतीनाममाननीय अज्ञानिनामसभावनीय मदरागमानमोहितमानसदुर्वासनादुराप मदादिदोषैर्मोहित यन्मानस तस्य या दुर्वासना तया दुरापो दुष्प्राप्योऽहमेव ॥

**यजनयजमानयाजकयागमयोऽहं यमादिरहितोऽहम् ।**
**इन्द्रयमवरुणयक्षराक्षसमरुदीशवह्निरूपोऽहम् ॥ ३६ ॥**

**यजनयजमानयाजकयागमय इति ।** यजन समन्त्रकहविःप्रक्षेपणादिक्रिया, यजमानो यज्ञकर्ता, याजक ऋत्विज, यागो देवतोद्देशेनाहवनीयाग्नौ पुरोडाशादिप्रदान तन्मय तद्रूप इत्यर्थ । यमादिरहितोऽष्टाङ्गसाधनरहित इन्द्रयमवरुणयक्षराक्षसमरुदीशवह्निरूप दशदिक्पालस्वरूपोऽहमेव ॥

**रक्षाविधानशिक्षावीक्षितलीलावलोकमहिमाहम् ।**
**रजनिदिवसविरामस्फुरदनुभूतिप्रमाणसिद्धोऽहम् ॥ ३७ ॥**

**रक्षेति ।** रक्षा जगद्रक्षण तस्य विधान कर्तव्यता तस्य शिक्षा तया यो वीक्षितलीलावलोकस्तस्य महिमा रजनीदिवसविरामस्फुरदनुभूतिप्रमाणसिद्ध रात्रिदिवसयोर्विरामोऽभावस्तस्मिन्या स्फुरद्रूपानुभूतिरनुभव स एव प्रमाण तेन सिद्धोऽहमेव ॥

**लक्षणलक्ष्यमयोऽहं लाक्षणिकोऽहं लयादिरहितोऽहम् ।**
**लाभालाभमयोऽहं लब्धव्यानामलभ्यमानोऽहम् ॥ ३८ ॥**

**लक्षण इति ।** लक्षणलक्ष्योभयमय लाक्षणिक लक्षणागम्योऽर्थ लयादिरहित लयविक्षेपकषाये रहित लाभालाभमय उभयरूप लब्धव्यानां प्राप्तव्यानां मध्येऽलभ्यमान अप्राप्यमानोऽहमेव ॥

वर्णाश्रमरहितोऽहं वर्णमयोऽहं वरेण्यगण्योऽहम् ।
वाचामगोचरोऽहं वचसामर्थे पदे निविष्टोऽहम् ॥ ३९ ॥

**वर्णाश्रमरहित इति ।** वर्णाश्रमोभयरहितः वर्णमयो मातृकामयः वरेण्यगण्यः वरेण्येषु गण्यः मान्यः वाचामगोचरः पदार्थानाम् विषयः वचसा वाक्यानामर्थे पदे च निविष्टः अर्थरूपेण प्रविष्टोऽहमेव ॥

शमदमविरहितमनसां शास्त्रशतैरप्यगम्यमानोऽहम् ।
शरणमहमेव विदुषां शकलीकृतविविधसंशयगणोऽहम् ॥

**शमदमविरहितमनसामिति ।** शमदमादिसाधनविरहितमनसां पुरुषाणां शास्त्रशतैरपि अनयशास्त्रावगाहनैरप्यगम्यमानोऽप्राप्य विदुषां ज्ञानिनां शरणं स्थानं शकलीकृतविविधसंशयगणः छिन्नः अनेकप्रकारको यः संशयगणः संदेहसमूहः सोऽहमेव ॥

षड्भावविरहितोऽहं षड्गुणरहितोऽहमहितरहितोऽहम् ।
षट्कोशविरहितोऽहं षट्त्रिंशत्तत्वजालरहितोऽहम् ॥ ४१ ॥

**षड्भावविरहित इति ।** षड्भावविरहितोऽस्तीत्यादिशरीरधर्मरहितः षड्गुणरहितः मधुरादिषड्गुणरहितः अहितरहितोऽहं स्वस्यानिष्टरहितः षट्कोशविरहितः पितृजकोशत्रयं मातृजकोशत्रयं तद्विरहितः 'पितृभ्यामशिताद[1]न्नात्षट्कोशं जायते वपुः । स्नायवोऽस्थीनि मज्जा च जायन्ते पितृतस्तथा ॥ त्वङ्मांसशोणितमिति मातृतश्च भवन्ति हि॥' इति शिवगीतायामुक्तकोशषट्कं षट्त्रिंशत्तत्त्वजालरहितः षट्त्रिंशत्तत्त्वानि शैवागमे भूतपञ्चकं प्राणपञ्चकं इन्द्रियाणि चतुर्दश महाभागः प्रधानं मायात्रिपापुरुषः[?] निद्धुनाद शक्तिशिव शान्तातीता इति ॥

1 नाडाद्याम्बतगतसह

संवित्सुखात्मकोऽहं समाधिसंकल्पकल्पवृक्षोऽहम् ।
संसारविरहितोऽहं साक्षात्कारोऽहमात्मविद्यायाः ॥४२॥

संवित्सुखात्मक इति । संवित्सुखात्मकः ज्ञानसुखमयः समाधिसंकल्पकल्पवृक्षः समाधिश्च संकल्पश्च तयोः कल्पवृक्षः संसारविरहितः संसारातीतः आत्मविद्यायाः साक्षात्कारः ब्रह्मविद्यायाः साक्षादनुभवः ॥

हव्यमहं कव्यमहं हेयोपादेयभावशून्योऽहम् ।
हरिरहमस्मि हरोऽहं विधिरहमेवास्मि कारणं तेषाम् ४३

हव्यमिति । हव्यं हविर्द्रव्यं देवतार्हद्रव्यं, कव्यं पितृणामर्हं द्रव्यं, हेयोपादेयभावशून्यः हेयं त्याज्यमुपादेयं ग्राह्यं तदुभयभावशून्यो हरिर्विष्णुः हरः शिवः विधिर्ब्रह्मा एतेषां त्रयाणां कारणमहमेव ॥

क्षालितकलुषमयोऽहं क्षपितभवक्लेशजालहृदयोऽहम् ।
क्षान्ताद्यक्षरसहितो विविधव्यवहारमूलमहमेव ॥ ४४ ॥

क्षालितकलुषमय इति । क्षालितकलुषमयः क्षालितं धौतं कलुषं पापमेतादृशं यत्स्वरूपं तन्मयः क्षपितभवक्लेशजालहृदयः दूरीकृतसंसारकष्टजालान्तःकरणः क्षान्ताद्यक्षरसहितः अकारादिक्षकारान्तवर्णयुक्तः विविधव्यवहारमूलं नानाप्रकारकशास्त्रीयलौकिको यो व्यवहारस्तस्य मूलं कारणमहमेव ॥

बहुभिः किमेभिरुक्तैरहमेवेदं चराचरं विश्वम् ।
सीकरफेनतरङ्गाः सिन्धोरपराणि न खलु वस्तूनि ॥४५॥

बहुभिरिति । एभिः बहुभिरुक्तैः किं विविधप्रकाररूपोहनिर्भाषणैः विप्रयोजनम् । व्यष्टिरूपेणोक्तार्थं समष्टिरूपेणाह—इदं चराचरं

निश्च अहमेव सर्वोपि प्रपञ्चोऽहमेव वस्त्वन्तराभावात्। तत्र दृष्टान्त. सीकर फेनतरङ्गा सिन्धोरपराणि न खलु वस्तूनि यथा सीकरादीना समुद्र एव शरीर तद्वदित्यर्थ ॥

**शरणं नहि मम जननी न पिता न सुता न सोदरा नान्ये।**
**परमं शरणमिदमेव चरणं मम मूर्ध्नि दैशिकन्यस्तम्॥४६॥**

**शरणमिति।** शरण रक्षण जननी मम नहि भवति, पिता रक्षण न, सुता पुत्रा अपि न, सोदरा भ्रातरोऽपि न, अन्ये सम्बन्धिनोऽपि मम शरण न रक्षणे पर्याप्ता न भवन्ति। तर्हि किं शरणमित्याह——परम-मिति। परममुत्कृष्ट शरण रक्षण मम मूर्ध्नि मस्तके दैशिकन्यस्त श्री-गुरुभिर्न्यस्त स्थापित चरण पदयुगमेव शरण नान्यदित्यर्थ ॥

**आस्ते दैशिकचरणं निरवधिरास्ते तदीक्षणे करुणा।**
**आस्ते किमपि यदुक्तं किमतः परमस्ति जन्मसाफल्यम्॥४७**

**आस्त इति।** आस्ते तिष्ठति दैशिकचरण श्रीगुरुचरणसरोज-द्वय मूर्ध्नि निरवधि नि सीम, तदीक्षणे श्रीगुरुचरणेक्षणेऽवलोकने करुणा कृपास्ते, अथ च तदुक्त किं श्रीगुरुभिरुपदिष्ट ज्ञान हृदये इत्यध्याहरणीयं निमग्यास्ते तत्परं जन्मसाफल्य सफल किं जन्मन इदमेव फल यदुक्तम्॥

**हिमकरकरसारसान्द्राः काङ्क्षितवरदानकल्पविशेषाः।**
**श्रीगुरुचरणकटाक्षाः शिशिराः शमयन्ति चित्तसंतापम्**

**हिमकरकरसान्द्रा इति।** हिमकरश्चन्द्र तस्य कराणा किरणाना य सारोऽमृतद्रवस्तद्वत्सान्द्रा निबिडा काङ्क्षितवरदानकल्पविशेषा. स्वेष्ट-वरदाने कल्पा समर्था एतेष्वपि विशेषाः विशिष्टा एतादृशा श्रीगुरु-

चरणकटाक्षाः गुरुकरुणापाङ्गाः शिशिराः शीतलाः चित्तसंतापं त्रिविधतापं शमयन्ति दूरीकुर्वन्ति । आनन्दयन्तीत्यर्थः ॥

**कवलितचञ्चलचेतो गुरुतरमण्डूकजातपरितोषा ।**
**शेते हृदयगुहायां चिरतरमेकैव चिन्मयी भुजगी ॥४९॥**

कवलितचञ्चलचेत इति । कवलितो ग्रसितो यश्चञ्चलश्चेतोलक्षणो यो गुरुतरोऽत्यन्तगुरुर्मण्डूकः भेकः तेन जातपरितोषा संतुष्टा एतादृशी चिन्मयी चैतन्यरूपा भुजगी हृदयगुहायां चिरतरं चिरकालं शेते सुप्ता भवति । एतदुक्तं भवति । चेतोवृत्तिलये हृदयपुण्डरीके स्वात्मप्रकाशो भवति, अथवा शेत इति पदसामर्थ्यात्सुषुप्तौ बुद्ध्यादिसर्वोपाधिलये सति केवला चितिरेव सुखात्मिका तिष्ठतीत्यर्थः ॥

**मयि सुखबोधपयोधौ महति ब्रह्माण्डबुद्बुदसहस्रम् ।**
**मायाविशेषशालिनि भूत्वा भूत्वा पुनस्तिरोधत्ते ॥५०॥**

मयीति । मय्यधिष्ठानभूते सुखबोधपयोधौ सुखस्वरूपो यो बोधः स एव पयोधिस्तस्मिन्पयोधौ समुद्रे महति व्यापके ब्रह्माण्डबुद्बुदसहस्रं ब्रह्माण्डान्येव बुद्बुदास्तेषां सहस्रम् । अनन्तानि ब्रह्माण्डानीत्यर्थः । मायाविशेषशालिनि मायैव विशेषस्तेन शालिनि शोभायमाने भूत्वा निरोधत्ते भूत्वाभूत्वोत्पद्योत्पद्य तिरोधत्तेऽन्तर्हितं भवति ॥

**गुरुकृपयैव सुनावा प्राक्तनभाग्यप्रबुद्धमारुतया ।**
**दुःसहदुःखतरङ्गस्तुङ्गः संसारसागरस्तीर्णः ॥ ५१ ॥**

गुरुकृपयेति । गुरुकृपयैव गुरुकटाक्षलक्षणयैव सुनावा सुष्ठुनौकया प्राक्तनभाग्यप्रबुद्धमारुतया पूर्वजन्मसंचितं यत् सुकृतं पुण्यं तदेव प्रबुद्धमारुतोऽनुकूलवायुः सोऽस्या अस्तीति तया दुःसहदुःख-

दु सहान्यसह्यानि यानि दुःखानि तएव तरङ्गा ऊर्मयो यस्मिन् स एतादृश संसारसागर तीर्णः उत्तीर्ण । मयेत्यध्याहारः ॥

**सति तमसि मोहरूपे विश्वमपश्यं तदेतदित्यखिलम् ।**
**उदितवति बोधभानौ किमपि न पश्यामि किमिदं चित्रम्॥**

**सतीति ।** सति विद्यमाने तमसि मोहरूपेऽज्ञानरूपेन्धकारे विश्वम् पश्य सर्वं जगदृष्टवान् । तदेतत्पूर्वंदृष्टमिदमखिलं समस्तं उदितवति बोधभानौ उदयं प्राप्ते ज्ञानार्के किमपि न पश्यामि किमपि किंचिदपि नावलोकयामि तदिति किं चित्रं अद्भुतमित्यर्थः ॥

**नाहं नमामि देवान् देवानतीत्य न सेवते देवम् ।**
**न तदनुकरोति विधानं तस्मै यतते नमोनमो मह्यम्॥५३॥**

**नाहमिति ।** अहं देवान्न नमामि न नमस्करोमि योदेवानतीत्यातिक्रम्य स्थितः स देवः देवान्न सेवते तदनु तदनन्तरं विधानं विध्युक्तं कर्म न करोति तस्मै सर्वात्मभूताय यतते प्रयत्नवते मह्यं नमो नमः इत्यादरार्थे द्विरुक्तिः ॥

**इत्यात्मबोधलाभं मुहुर्मुहुरनुचिन्त्य मोदमानेन ।**
**प्रारब्धकर्मणोऽन्ते परं पदं प्राप्यते स्म कैवल्यम् ॥ ५४ ॥**

**इतीति ।** इति यथोक्तमात्मबोधलाभं स्वात्मज्ञानप्राप्तिं मुहुर्मुहुः पुनः पुनः अनुचिन्त्य मननगोचरीकृत्य मोदमानेनानन्दावस्थां प्राप्तेनाधिकारिणा जीवन्मुक्तेन प्रारब्धकर्मणोऽन्ते प्रारब्धकर्मावसाने देहावसाने परं कैवल्यं निरुपमं मोक्षपदं प्राप्यते ॥

**मोहान्धकारहरणं संसारोद्वेलसागरोत्तरणम् ।**
**स्वात्मनिरूपणमेतत्प्रकरणमकृत दक्षिणामूर्तिः ॥ ५५ ॥**

**मोहान्धकारहरणमिति।** मोहान्धकारहरणं अज्ञानान्धकारनाशनं संसारोद्वेलसागरोत्तरणं संसार एवोद्वेलसागरः वेलामतिक्रान्तः समुद्रस्त-स्य तरणं पारप्रापकं एतत्स्वात्मनिरूपणमेतदार्यावृत्तेन प्रतिपादितं निरूपणं प्रकरणं दक्षिणामूर्तिः श्रीपरमशिवः अकृत कृतवान् । एतावता आरा-ध्याराधकयोरैक्यता सूचिता भवति ॥

**अज्ञानान्ध्यविहन्त्रा विरचितविज्ञानपङ्कजोह्लासः ।**
**मानसगगनतलं मे भासयति श्रीनिवासगुरुभानुः १५६**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छं-**
**कराचार्यविरचितं स्वात्मनिरूपणं समाप्तम् ।**

**अज्ञानान्ध्यविहन्त्रेति।** अज्ञानान्ध्यविहन्त्रा अज्ञानमेवान्ध्यमन्धत्वं तस्य विहन्ता हरणसमर्थः विरचितविज्ञानपङ्कजोह्लासः विरचितः कृतः विज्ञानमेव पङ्कजं कमलं तस्य उह्लासः विकासो येन स मानसगगनतलं मे मानसं मनस्तदेव गगनतलं व्योमतलं मम श्रीनिवासगुरुभानुः श्रीनि-वासः श्रीविष्णुगुरुः स एव भानुः सहस्रकिरणः भासयति प्रकाशयति । एतावता गुरुदेवतयोरैक्यमाननमेवात्मभावप्रकाशसाधनमिति प्रतिपादितं भवति ॥ १५६ ॥

चैतन्यद्युतिरुचिराङ्गो दूरनिरस्तद्वयामतामसगः ।
हृदयसरोजे विरचे भ्रमति भ्रमरो विलक्षणः कश्चित् ॥

इति श्रीसच्चिदानन्दसरस्वतीविरचिता आर्याव्याख्या समाप्ता.

---

## ॥ अथ सोपानपञ्चकप्रारंभः ॥

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयता-
मात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥
सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् ।
सद्विद्वानुपसर्प्यतां प्रतिदिनं तत्पादुके सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥
वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसंधीयताम् ।
ब्रह्मैवास्मि विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहमतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥
क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम् ।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यता-
मौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥ ४ ॥
एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥

यः श्लोकपञ्चकमिदं पठते मनुष्यः
संचिन्तयत्यनुदिनं स्थिरतामुपेत्य ।
तस्याशु संसृतिदवानलतीव्रघोर-
तापः प्रशान्तिमुपयाति चितिप्रसादात् ॥ ६ ॥

इति श्रीमच्छंकराचार्यविरचितं सोपानपञ्चकं संपूर्णम् ।